TRIVANDRUM SANSKRIT SERIES.

NO. VII.

# THE BRAHMATATVAPRAKÂSIKÂ

BY

SADÂSIVENDRASARASVATÎ

Edited with Notes

BY

T GANAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1909

॥ श्रीः ॥

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ७.

# ब्रह्मतत्त्वप्रकाशिका

नाम

# ब्रह्मसूत्रवृत्तिः



परमहंसपरिव्राजकाचार्येण

श्रीसदाशिवेन्द्रसरस्वत्या

विरचिता

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधिता

लघुटिप्पण्या च संयोजिता ।

सा च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

कोल्लम्बाब्दाः १०८५, क्रैस्ताब्दाः १९०९.

# PREFACE.

This work, named Brahma-tatva-prakâsikâ, is an exposition of the Brahma Sûtras,—the aphorisms of the Vedânta Philosophy. The meaning and significance of every Sûtra are presented in this work in such a succinct manner, that as soon as they are grasped, the conceptions formed from the study of the Commentary of Srî Sankarâchârya may at once be recalled to the mind of the student, and also that this Vritti (exposition) may render comparatively greater assistance to those desirous of entering upon the study of the Vedânta Sâstra, than other Vrittis in use

There is another Vritti larger than this, called Brahmâmrita-varshinî, which will be published as one of this Sanskrit Series before long. As not only the method of treatment of that larger work, but its sentences also are largely found in this Brahma-tatva-prakâsika, it seems that this work is an abridged form of the other

The author of this work is one high-souled sage, Sadâsivendra Sarasvatî by name, and known also as Sadâsivabrahmendra. About 150 years ago, he lived in the villages, Nerur, Kotimuti, &c. on the bank of the Kaveri, and Karur, on the bank of the Âmrâvati, his deeds exciting wonder and his life being almost like that of one who had attained to the true knowledge of the Supreme Spirit and been liberated from worldly ties in this life itself. The place of his interment at Nerur is even now an object of reverence for the people. A wide description of his deeds is given in a Tamil work, called Âscharya-darpana.

This work has been prepared for publication from two manuscripts, one of which is that used by H. H. The late Maharaja, Ayilyam Tirunal, the uncle of H H. The present Maharaja. The other was kindly sent to me by Mr. Rangopádhyáya, a resident of the Kallidakurichi village in the Tinnevelly District.

T GAṆAPATI SASTRÍ.

# निवेदना ।

**इयं ब्रह्मतत्त्वप्रकाशिका** नाम ब्रह्मसूत्राणां वृत्तिः; अस्यां प्रतिसूत्रमर्थानां ग्रन्थयस्तथा विन्यस्ताः, यथा तैराकलितमात्रै**र्भगवत्पादीयभाष्यार्थ**गोचराः संस्काराः प्रतिपत्तुर्झटित्युद्बुद्धा भवेयुः, यथा च वृत्तिरियं वेदान्तशास्त्रप्रविविक्षोः प्रचरद्वृत्त्यन्तरापेक्षया गुरुम् उपकारम् आदध्यात् । अस्तीतोऽपि विपुला काचिद् वृत्तिः **ब्रह्मामृतवर्षिणी**ति, याम् अस्यां **संस्कृतग्रन्थावला**वचिराद् प्रथयिष्यामः । न केवलं तदीयाया विवरणरीतेः, वाक्यानामपि तदीयानाम् अस्यां भूम्नोपलम्भात् तत्संग्रहात्मिकेयमित्यपि प्रतिभाति ।

अस्याः कर्ता **सदाशिवेन्द्रसरस्वती**नामा **सदाशिवब्रह्मेन्द्र** इति विदितः कश्चिद् महात्मा । सः १९०. वर्षेभ्यः प्राग् आम्रवतीतीरगते **करूर्**ग्रामे, कावेरीतीरगेषु **नेरूर्कोटिमुटि**प्रभृतिषु ग्रामेषु च जीवन्मुक्तप्रायः परमाश्चर्यचर्यश्चचार । तस्य समाधिस्थानमद्यापि **नेरूर्**ग्रामे लोकपूजितमुल्लसति । विस्तरेण तु तस्य चरितम् **आश्चर्यदर्पणा**ख्ये द्रमिलभाषाग्रन्थे वर्णितमस्ति ।

अस्या वृत्तेः संशोधनाधारभूतौ द्वावादर्शौ । तत्रैको महामहिम्ना श्रीमदाश्लेष**रामवर्मवञ्चिमहाराजेन** साम्प्रतिकश्रीमहाराजमातुलेन स्वयमुपयुक्तः, अपरस्तु **कल्लिटक्कुरिच्चि**ग्रामवास्तव्येन **रङ्गोपाध्याय**महाशयेन सदय मह्यं प्रहितः ॥

**त. गणपतिशास्त्री.**

# अधिकरणसूची ।

# पाठभेदः ।

| पृ. | प. | (क) | (ख) | पृ. | प. | (क) | (ख) |
|---|---|---|---|---|---|---|---|
| १ | २० | प्रयो | सम्प्रयो | ७ | ३ | त्वे न बि | त्वेऽनि |
| ,, | २३ | प्रेक्षणा | प्रेक्षितत्वा | ,, | ४ | ठो न नि | ठोऽनि |
| ,, | २५ | रूह्या | रूह्नीया | ९ | ४ | हेत्वन्तरमाह | इतश्च नानन्दमयोऽत्र प्रतिपाद्य इत्याह |
| ,, | ,, | दिसू | दिभिः सू | ,, | ६ | स्य ब्रह्म | स्यात्म |
| २ | ३ | ह्मपरलि | ह्मलि | ,, | ८ | यद्समवधा | यद्विधा |
| ,, | ,, | तिः । उत्त | तिः । प्राथम्याद्-स्याधिकरणस्य नाधिकरणसङ्गतिः । उत्त | ,, | १६ | पूर्वं ब्रह्मपदानन्दमयपदतदभ्यासादितो | पूर्वत्र ब्रह्मपदमानन्दमयपदमानन्दाभ्यासश्चेति मुख्यान्नितयात्मकबहुप्रमाणवशात् |
| ,, | ४ | नारम्भात् | नारम्भसम्भवात् | १० | ४ | न तथेह | तथा |
| ,, | ७ | यद्धि स | यत् स | ,, | ,, | तुं ह्य | तुमद्य |
| ,, | ८ | यावल | याल | ,, | १२ | यल्लि | यत्तु लि |
| ,, | १६ | लीभू | लभू | ,, | १८ | अत्राति | अति |
| ,, | २० | न्तवि | न्तवाक्यवि | ,, | २१ | दृष्टव्येति | दृष्टव्येति द्रष्टव्यम् |
| ,, | २७ | अत्र | तत्र | ,, | २३ | तत्र प्रा | तत्र किं प्रा |
| ३ | २ | स्थस | स्थं स | ११ | २ | दित्यह | दित्यादिह |
| ,, | ३ | त्वासि | त्वाप्रसि | ,, | २२ | यत्र्या | यत्र्याम् |
| ,, | ५ | स्य ज | स्य ब्रह्मणो ज | ,, | २३ | न्धात् तदेव | न्धादेव |
| ,, | २० | त्यादिवं | त्यादिनावे | ,, | २६ | क्तं मे | क्तं तन्मे |
| ,, | २१ | वेदो | वेदस्यो | १२ | ८ | स्वास्ति | समस्ति |
| ,, | २२ | ङ्गीकारात् | ङ्गीकरणात् | ,, | २४ | वाय | व युक्तः |
| ,, | २५ | र्णयार्थत्वा | र्णायकत्वा | १३ | २ | न्तः यथा | न्तः वामदेववद् यथा |
| ४ | १७ | नां विधिविधुरा | नामविधिपरा | ,, | ८ | ज्ञात् तद्गु | ज्ञाच्च तद्गु |
| ,, | २२ | द्वाराङ्गी | द्वारमङ्गी | ,, | २३ | दमारभते | दमाह |
| ,, | २७ | गात् | गाच्च | १४ | ९ | रण्येऽपि | रणस्यापि |
| ,, | ,, | तयै | ते | १५ | २५ | कर्तृ | अतृ |
| ५ | १२ | णात्याक्षेप | णाक्षेपिकी | १६ | २१ | हिं य | हि हिं य |
| ,, | २१ | तत् | तद्वत् | ,, | २२ | श्रवणे | श्रयणे |
| ,, | ,, | सिवत्या | स्तीत्या | १७ | १६ | थभिद | यिद्युभिद |
| ,, | २४ | तदेव | सदेव | ,, | २४ | इ (वस्तु ?) ति | इति |
| ६ | १६ | सच्छन्दशब्दि | सच्छब्दि | १८ | १३ | त्यन्त | त्याद्यन्त |
| ,, | २४ | प्रकृत्य | प्रक्रम्य | २१ | २५ | रलोकावात्म | रघुलोकात्म |
| ,, | २६ | न्यत्वे | न्यद्वै | | | | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २४ | १२ | दिति | दित्यर्थः | ३७ | १७ | त्वस्या | त्वेनास्य |
| २५ | ४ | न्वाय | न्वायाय | ३८ | २१ | समस्ति | साधनमस्ति |
| २६ | १६ | र, ब्र | र, किन्तु ब्र | ४१ | २३ | न वि | न वाक्यवि |
| २७ | ८ | केऽन्तर्द | के यो द | ४३ | ४ | सत्य | सर्व |
| २८ | ३ | शस्या | शशब्दस्या | ४४ | २७ | वोऽसच्छ | वोऽश |
| ,, | १५ | वृत्त्यर्थं | वर्त्तक | ४९ | २५ | तत्वा | तभेदकत्वा |
| ,, | १८ | दसम्भ | दभ | ५० | १६ | मन | मप्यन |
| ३० | ४ | ब्रह्मा | परमा | ५१ | ५ | णवि | णप्रतीतिवि |
| ३१ | १४ | दुपपा | दुत्पा | ५२ | १३ | त्तिः । त | त्तिः तस्योक्तदोष-स्यानुपपत्तिः । त |
| ,, | २४ | त्यत्वम् । नथा | त्यतया | | | | |
| ३४ | १० | क्ये जी | क्येऽङ्गुष्ठमात्रजी | ५३ | ११ | (त्वमेव तस्य) | त्वादेव कारणत्वमे- तस्य |
| ,, | १९ | नात् सर्वस्य | नात् प्राणस्यात प्राणश्रुतिप्रसिद्धस्य | ६९ | २ | याद | याद्वितात् |
| ३६ | २७ | क्प्रा | क्शब्दप्रा | ७० | ३ | स्थ इति | स्थ एवेति |
| ३७ | ७ | क्षमाव्यक्ताज्ञी | क्षमस्याव्यक्तत्वाज्ञी | ७१ | १४ | वद द्वयोः | वदनयोः |
| ,, | १७ | ब्दम | ब्दमात्रम | ,, | २४ | कानां श्रु | कश्रु |

॥ श्रीः ॥

श्रीसदाशिवेन्द्रसरस्वतीप्रणीता

## ब्रह्मतत्त्वप्रकाशिकाख्या

# ब्रह्मसूत्रवृत्तिः ।

---

आम्नायान्तैकसंसिद्धमादिमध्यान्तवर्जितम् ।
आनन्दघनमापूर्णं किञ्चिज्ज्योतिरुपास्महे ॥ १ ॥
नमस्त्रय्यन्तकान्तारविहारैकपटीयसे ।
वादिमत्तेभसंहर्त्रे व्यासकेसरिणे सते ॥ २ ॥
स्तुवन्मोहतमस्स्तोमभानुभावमुपेयुषः ।
स्तुमस्तान् भगवत्पादान् भवरोगभिषग्वरान् ॥ ३ ॥
यद्वाणीद्युमणिध्वस्ता मन्मोहध्वान्तसन्ततिः ।
श्रीगुरून् भावयामस्तांस्त्रय्यन्ताम्बुजभास्करान् ॥ ४ ॥
श्रीमद्देशिकपादाब्जपरिचर्याबलादहम् ।
भाष्यानुगां ब्रह्मसूत्रवृत्तिं कुर्वे यथामति ॥ ५ ॥

* १ जिज्ञासाधिकरणम् *

इह खलु भगवान् बादरायणः प्रेक्षावत्प्रवृत्त्यौपयिकमापाततस्त्रय्यन्तवचोभिः प्रतिपन्नमनुबन्धजातं न्यायतो निर्णेतुमिदमारचयाञ्चकार—

**अथातो ब्रह्मजिज्ञासा ॥ १ ॥**

इति। अत्राथशब्देन साधनचतुष्टयसम्पत्त्यानन्तर्यमुच्यते। अतश्शब्देन साधनचतुष्टयस्य सम्भावना। ब्रह्मजिज्ञासेत्यनेनाज्ञातत्वेन विषयत्वं ज्ञातत्वेन प्रयोजनत्वं ब्रह्मण उक्तं भवति । एवञ्च प्रेक्षावत्प्रवृत्त्यङ्गभूताधिकार्यादिसमर्पकत्वेन समन्वयाद्यखिलविचारोपोद्घातत्वादादावस्य सूत्रस्य सङ्गतिः । विचारविषयवेदान्तवाक्यैः स्वार्थनिर्णयायास्यापेक्षणाच्छ्रुतिसङ्गतिः । एवं सर्वेषां सूत्राणां श्रुतिसङ्गतिर्द्रष्टव्या । विशेषतो ब्रह्मपरवाक्यतात्पर्यनिर्णायकन्यायसूचकत्वाद् ब्रह्मविचारात्मकशास्त्रसङ्गतिः । एवमग्रेऽपि शास्त्रे सङ्गतिरूह्या । 'अथातो ब्रह्मजिज्ञासे'त्यादिसूत्रैः सर्वे वेदान्ता ब्रह्मपरा

इति समन्वयप्रतिपादनात् तेषामाध्यायं समन्वयाध्यायसङ्गतिः । प्रथमपादे स्पष्टब्रह्मपरलिङ्गानां वाक्यानां विचार्यत्वादापादं पादसङ्गतिः । उत्तराधिकरणसङ्गतिस्तु तस्यैवानेनेति नास्योच्यते । पूर्वपक्षे विचारानारम्भादुपायान्तरसाध्या मुक्तिः, सिद्धान्ते तु तदारम्भसम्भवात् तदधीनज्ञानसिद्धेस्तेनैव मुक्तिरिति फलभेदः । अत्र वेदान्तवाक्यविचारो विषयः । स न कर्तव्यः कर्तव्यो वेति विषयप्रयोजनसम्भवासम्भवाभ्यां सन्देहे, यद्धि सान्दिग्धं सप्रयोजनं तस्य विचारविषयत्वम् । ब्रह्मणस्तु स्फुटतराहम्प्रत्ययावलम्बनत्वेनासन्दिग्धत्वात तत्ज्ञानान्मुक्तिलक्षणप्रयोजनाभावाच्च न विचारविषयत्वम् । अतोऽसम्भावितविषयादिमान् वेदान्तवाक्यविचारो न कर्तव्य इति पूर्वः पक्षः ।

सिद्धान्तस्तु श्रुतिगम्यब्रह्मात्मतत्त्वस्याहम्प्रत्ययानालम्बनत्वेन सन्दिग्धत्वात् तत्साक्षात्कारादनर्थनिवृत्तिलक्षणमोक्षसम्भवात् सम्भावितविषयादिमान् वेदान्तवाक्यविचारः कर्तव्य इति ।

सूत्रार्थस्तु अत्र सूत्रेऽनुवादकत्वेनानर्थक्यपरिहाराय पुरुषप्रवृत्तये च कर्तव्येति पदमध्याहर्त्तव्यम् । नन्वेवमप्यानर्थक्यं तदवस्थमेव, प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्त्तव्यतानन्वयादिति चेत्, नैष दोषः । अत्र प्रकृत्या फलीभूतं ब्रह्मापरोक्षज्ञानमजहल्लक्षणया कथ्यते । सन्प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया जेगीयते । अर्थादपरोक्षज्ञानस्य मोक्षसाधनत्वं वेदान्तवाक्यानां विचार्यत्व च लभ्यते । एवञ्च श्रुत्यर्थाभ्यां साधनचतुष्टयसम्पन्नस्याधिकारिणो मोक्षसाधनब्रह्मापरोक्षज्ञानाय वेदान्तविचारः कर्तव्य इति विचारे कर्तव्यतान्वयसम्भवादिति ॥ १ ॥

* २ जन्माद्यधिकरणम् *

नन्वित्थं ब्रह्मणस्त्र्यन्तविचारमुखेन विचार्यत्वमवादि, तदसारं लक्षणाभावेन स्वरूपस्यैवासिद्धेरित्याक्षिप्याह—

## जन्माद्यस्य यतः ॥ २ ॥

अस्य पूर्वाधिकरणेनाक्षेपिकी सङ्गतिः । अत्र पूर्वपक्षे ब्रह्मस्वरूपासिद्ध्या मुक्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र 'यतो वा इमानि भूतानि' (तै.३.१) इत्यादिवाक्यं विषयः । अत्र श्रूयमाणं जन्मादिकं ब्रह्मलक्षणं न वेति सन्देहे जन्मादेर्जगन्निष्ठत्वेन ब्रह्मनिष्ठत्वासम्भवान्न तद् ब्रह्मलक्षणम् । न च 'सत्यं ज्ञानम्' (तै.२.१)

इत्यादिवाक्यस्थसत्यादिकं लक्षणं स्यादिति साम्प्रत, लोकसिद्धभिन्नार्थकानामेकब्रह्मलक्षणत्वासिद्धेरिति पूर्वः पक्षः । सिद्धान्तस्तु अस्य प्रत्यक्षाद्युपस्थापितस्य जगतो जन्मादि जन्म उत्पत्तिरादिर्यस्य जन्मस्थितिभङ्गस्य तज्जन्मादि यतो यस्माद् ब्रह्मणो भवति, तस्य जगज्जन्मादिकारणस्य परस्य ब्रह्मणोऽनादिसिद्धस्य सकलजगज्जन्मादिकारणत्वं तटस्थलक्षणम् । सत्यादिकं स्वरूपलक्षणम् । न च लोकसिद्धभिन्नार्थकत्वादेकब्रह्मलक्षणत्वमप्रसिद्धमिति साम्प्रतं, सत्यादिपदानामखण्डार्थकत्वेनैकब्रह्मपर्यवसायितया लक्षणत्वसम्भवादिति ॥ २ ॥

* ३ शास्त्रयोनित्वाधिकरणम् *

नन्वित्थं ब्रह्मणो जगत्कारणत्वेन सर्वज्ञत्वमर्थादभाणि । तदरमणीयं, वेदस्य नित्यत्वेन जगत्कारणत्वायोगादित्याक्षिप्याह—

## शास्त्रयोनित्वात् ॥ ३ ॥

अस्य पूर्वाधिकरणेनाक्षेपिकी सङ्गतिः । फलन्तु पूर्वपक्षे ब्रह्मणः सर्वज्ञत्वानिर्धारणं, सिद्धान्ते तन्निर्धारणमिति द्रष्टव्यम् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः' (बृ. २. ४. १०) इत्यादिवाक्यं विषयः । तद् ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयति उत साधयतीति सन्देहे 'वाचा विरूपनित्यया' (तै. सं. २. ६. ११) इति वेदस्य नित्यत्वश्रवणात् तत्कर्तृत्वेन सर्वज्ञत्वं न साधयतीति पूर्वः पक्षः । सिद्धान्तस्तु शास्त्रस्य ऋग्वेदादेः सर्वज्ञकल्पस्य योनिः कारणं, तस्य भावस्तत्त्वं, तस्माद्वेदकर्तृत्वात् सर्वज्ञत्वं साधयति । यद्वादि पूर्ववादिना वेदस्य नित्यत्वश्रवणादिति । तदसाधु । 'अस्य महतो भूतस्ये'त्यादिवेदोत्पत्तिश्रुत्यनुरोधेन नित्यत्वश्रुतेरर्थवादपरत्वात् । न च वेदस्य सकर्तृकत्वे पौरुषेयत्वं स्यादिति साम्प्रतं, तस्योपलभ्यराचितत्वानङ्गीकारादिति । प्रथमवर्णकम् ।

यद्वा जगत्कारणत्वेन ब्रह्मणि लक्षिते तस्य मानान्तरगम्यत्वमाशङ्क्याह—

शास्त्रयोनित्वात् ।

लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलत्वं सङ्गतिः । अत्र पूर्वपक्षेऽनुमानस्यैव विचार्यत्वासिद्धिः । सिद्धान्ते वेदान्तवाक्यानामिति फलभेदः । 'तन्त्वौपनिषदं पुरुषम्' (बृ. ३. ९. २६) इत्यादिवाक्यं विषयः । तत् किं ब्रह्मणः शास्त्रैकगम्यत्वं समर्पयति उत नेति सन्देहे ब्रह्मणः सिद्धवस्तुत्वेन मानान्तरेणाप्यवगम्यमानत्वान्न

समर्पयतीति पूर्वः पक्षः । सिद्धान्तस्तु शास्त्रमृग्वेदादि योनिः प्रमाणं यस्य तत् तथोक्तं, तस्य भावस्तत्त्वम् । तस्माद्वेदैकप्रमाणकत्वात् तदेकगम्यत्वं समर्पयति । यत्तु मानान्तरगम्यत्वं ब्रह्मणोऽभाणि तन्न, तस्य रूपाद्यभावेन तद्गम्यत्वासम्भवादिति । द्वितीयवर्णकम् ॥ ३ ॥

( ४ समन्वयाधिकरणम् )

नन्वित्थं ब्रह्मण. शास्त्रैकगम्यत्वमभ्यधायि । तदसाधु शास्त्रस्यान्यपरत्वादित्याक्षिप्याह—

## तत्तु समन्वयात् ॥ ४ ॥

अस्य पूर्वेणाक्षेपिकी सङ्गतिः । फलन्तु पूर्वपक्षे मुमुक्षोर्वेदान्तेषु प्रवृत्त्यनुपपत्तिः, सिद्धान्ते प्रवृत्तिसिद्धिरिति द्रष्टव्यम् । अत्र सर्वे वेदान्ता विषयः । ते किं कर्मशेषकर्त्रादिपरा उत नित्यसिद्धब्रह्मपरा वेति सन्देहे अहेयानुपादेयसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वप्रसङ्गात् कर्मशेषकर्त्रादिपरा एवेति पूर्वः पक्षः । सिद्धान्तस्तु—सौत्रस्तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद् ब्रह्म वेदान्तेषु प्रतिपाद्यते, कुतः, समन्वयात् सम्यक् तात्पर्यवत्त्वेन वेदान्तानां ब्रह्मण्यन्वयात् सम्बन्धाद् । अतो वेदान्ता नित्यसिद्धब्रह्मपराः, न कर्त्रादिपराः भिन्नप्रकरणस्थत्वात् । न च प्रकरणाभेदादुपासनाविधिपरा इति साम्प्रतं, 'तत्त्वमस्या' (छा., ६. ७) दीनां विधिविधुराणां बहुलमुपलब्धेः । यत्तु निष्प्रयोजनत्वमुक्तं, तदयुक्तम् अनर्थनिवृत्तेः प्रयोजनस्य सम्भवात् । यच्च सापेक्षत्वं तन्न, रूपादिहीनस्य ब्रह्मणः प्रमाणान्तरागम्यत्वेन तत्प्रतिपादकवेदान्तानां सापेक्षत्वासम्भवात् । तस्मादुपक्रमादिलिङ्गैर्वेदान्ता ब्रह्मपरा एवेति सिद्धम् । प्रथमवर्णकम् ।

यद्वा इत्थं ब्रह्मणो वेदान्तवेद्यत्वेऽपि तद्विधिद्वाराङ्गीकुर्वत एकदेशिनो मतं प्रसङ्गादाक्षिप्याह—

तत्तु समन्वयात् ।

पूर्वेणास्य प्रसङ्गसङ्गतिः । अत्र पूर्वपक्षे उपासनया मुक्तिः सिद्धान्ते ज्ञानादिति फलभेदः । तत्र वेदान्ताः प्रतिपत्तिविधिविषयतया ब्रह्म समर्पयन्ति उत साक्षादिति सन्देहे प्रवृत्त्यादिलिङ्गाभावेन सिद्धे शक्तिग्रहासम्भवात् प्रवृत्तिनिवृत्तिपरस्यैव शास्त्रत्वेन सिद्धपरत्वे तत्त्वायोगाद् विधिविषयतयेति पूर्वः पक्षः । सिद्धान्तस्तु-तद् ब्रह्म साक्षाद् वेदान्ताः समर्पयन्ति, कुतः समन्वयात् तात्पर्यवत्त्वेन तेषां तत्रान्व-

यात् । यत्तु सिद्धे प्रवृत्त्यादिलिङ्गाभावेन न शक्तिग्रह इति, तन्न । प्रवृत्तिनिवृत्ती एव लिङ्गमिति न निर्बन्धः, 'पुत्रस्ते जात' इत्यादिषु हर्षादिलिङ्गेनापि शक्तिग्रहसम्भवात् । यत्तु प्रवृत्त्यादिपरस्यैव शास्त्रत्वमिति, तदपि न हितशासनाद्वेदान्तानां शास्त्रत्वोपपत्तेरिति दिक् । द्वितीयवर्णकम् ॥ ४ ॥

* ५ ईक्षत्यधिकरणम् *

इत्थं चतुर्भिः सूत्रैः सर्वजगत्कारणं सर्वज्ञं सर्ववेदान्तप्रतिपाद्यं ब्रह्मैवेति प्रत्यपादि । तत्र साङ्ख्याः कूटस्थत्वेन क्रियाशक्त्ययोगाद् ब्रह्म न जगत्कारणम्, अपि तर्हि त्रिगुणात्मकत्वात् क्रियाशक्तिमत् प्रधानमेव जगत्कारणमिति जगुः । तन्मतं निराकर्त्तुमिदमाह—

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

पूर्वेणास्याक्षेपसङ्गतिः । फलन्तु पूर्वपक्षे प्रधानैक्यसम्पदुपास्तिः सिद्धान्ते ब्रह्मैक्यधीरिति बोध्यम् । छान्दोग्ये श्रूयते 'सदेव' (६.२.१) इत्युपक्रम्य 'तदैक्षते'ति । तत्र सच्छब्दितं जगदुपादानं किं प्रधानम् उत ब्रह्मेति संशये प्रधानमिति पूर्वः पक्षः । सिद्धान्तस्तु न प्रधानं जगदुपादानम् । कस्माद् अशब्दम् । हेतुगर्भविशेषणमेतत् । अशब्दत्वादवेदप्रमाणकत्वात् । कस्मादवेदप्रमाणकत्वम्, ईक्षतेः धातुवाचकेक्षतिशब्दस्तदर्थलक्षकः ईक्षितृत्वश्रवणात् । नह्यचेतनस्य प्रधानस्येक्षितृत्व सम्भवति, तस्य चेतनधर्मत्वात् । नच कूटस्थब्रह्मणो ज्ञानक्रियाशक्त्यभावः, मायामहिम्ना सर्वस्याप्युपपत्तेः । अतः सदीक्षितृ चेतनं ब्रह्मैव जगदुपादानमित्यर्थः ॥५ ॥

ननु 'तत् तेज ऐक्षत', 'ता आप 'ऐक्षन्त' (छा. ६. २. ३. ४) इत्यचेतनेऽपीक्षितृत्वश्रवणात् तत् प्रधानेऽपि गौणमस्त्वित्याशङ्क्याह—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

अप्तेजसोरिव प्रधान ईक्षतिशब्दो गौण इति चेन्न । कस्माद्, आत्मशब्दात् । तदेव 'तदैक्षत' इति प्रकृतं सदीक्षितृ 'सेयं देवते'ति देवताशब्देन परामृश्य 'अनेन जीवेनात्मना' (छा. ६. ३. ३ ) इत्यात्मशब्दश्रवणादित्यर्थः ॥ ६॥

नन्वात्मशब्दः प्रधानेऽप्यस्तु तस्य नानार्थकत्वादित्याशङ्क्याह—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

न प्रधानमात्मशब्दवाच्यं 'स आत्मे'ति प्रकृतं सदणिमानमादाय 'तत्त्वम-

सी'ति श्वेतकेतोश्चेतनस्य तन्निष्ठतां तत्स्वरूपतामुपदिश्य 'अथ सम्पत्स्ये'(छा. ६. १४. २) इति प्रारब्धक्षयानन्तरं मोक्षोपदेशात् । अतश्चेतनस्याचेतनानिष्ठत्वानुपपत्तेः श्रद्धया तद् ध्यायतो मोक्षासम्भवादनर्थप्राप्तेश्चात्मशब्दश्चेतनपर इति सिद्धम् ॥ ७ ॥

ननु स्थूलारुन्धतीन्यायेन प्रधानोपदेशद्वारायमात्मोपदेशोऽस्त्वित्याशङ्क्याह—

## हेयत्वावचनाच्च ॥ ८ ॥

यद्यनात्मैव प्रधानं सच्छब्दवाच्य 'स आत्मा तत्त्वमसि' इतीहोपदिष्टं स्यात् स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षु शास्त्रं तस्य हेयत्वं ब्रूयात्, न तथा ब्रूते । अतो हेयत्वस्यावचनादनभिधानाच्चकारादेकविज्ञानेन सर्वविज्ञानोपक्रमविरोधाच्चेत्यर्थः ॥ ८ ॥

इत्थं प्रधानस्यात्मोपदेशद्वारा आत्मत्वगौणेक्षितृत्वनिरासेन जगत्कारणत्वं निरस्याधुना स्वतन्त्रैर्हेतुभिस्तदेव निरसितुं सूत्रत्रयमाह—

## स्वाप्ययात् ॥ ९ ॥

स्वस्मिन् प्रकृते सच्छब्दशब्दिते चिदात्मनि अप्ययात् 'सता सोम्य तदा सम्पन्नो भवति' (छा. ६.८.१) इति लयश्रवणाद् अपिपूर्वस्यैतेर्लयार्थकत्वात् । अतो यस्मिन् सर्वेषां जीवानां सुषुप्तावुपाधिकृतविशेषाभावादप्ययस्तच्चेतनं सच्छब्दवाच्यं ब्रह्मैव जगत्कारणं, न प्रधानमित्यर्थः ॥ ९ ॥

## गतिसामान्यात् ॥ १० ॥

गतेः सर्वेषु 'आत्मन आकाशः सम्भूतः' (तै. २. १) इत्यादिवेदान्तेषु चेतनकारणत्वावगतेः समानत्वान्नाचेतनं प्रधानं कारणमित्यर्थः ॥ १० ॥

## श्रुतत्वाच्च ॥ ११ ॥

श्रूयते हि श्वेताश्वतरोपनिषदि (६. ९.) सर्वज्ञमीश्वरं प्रकृत्य 'स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता न चाधिप' इति । तस्मात् सर्वज्ञं ब्रह्म जगतः कारणं नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥ ११ ॥

* ६ आनन्दमयाधिकरणम् *

इत्थं सर्वेषां वेदान्तानां सविशेषनिर्विशेषब्रह्मपराणामुपास्तिविधिद्वारा साक्षाच्च निर्विशेषब्रह्मपरत्वे सिद्धेऽप्यधुना निर्विशेषवाक्यविचारात्मकमिदमधिकरणमारभते—

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

ईक्षत्यधिकरणे 'तत् तेज ऐक्षते'ति अमुख्येक्षणप्रायपाठो यथा जगत्कारणत्वे न निश्चायकः न तथा 'आनन्दमय' इत्यत्र मयटो विकारार्थत्वे तत्प्रायपाठो न निश्चायक इति पूर्वेणास्य प्रत्युदाहरणसङ्गतिः। पूर्वपक्षे जीवस्यानन्दमयत्वेनोपास्तिः फल, सिद्धान्ते तु निर्विशेषब्रह्मैक्यप्रमितिरिति परमासिद्धान्तानुसारिणः । एकदेशिमते तूभयत्रोपास्तिरिति विवेकः। तैत्तिरीये (२.१) श्रूयते— 'अन्नरसमय' इत्याद्युपक्रम्य 'अन्योऽन्तर आत्मानन्दमय' इति । तत्र किमानन्दमयशब्देन 'सत्यं ज्ञानमि'ति प्रकृतं पर ब्रह्मोच्यते, किं वा अन्नमयादिवद् ब्रह्मणोऽर्थान्तरं जीव इति विशये अर्थान्तरमिति पूर्वः पक्षः । सिद्धान्तस्तु आनन्दमयः परमात्मैव, कुतः, अभ्यासाद्, आनन्दशब्दस्य ब्रह्मण्येव बहुकृत्वोऽभ्यासादित्यर्थः ॥ १२ ॥

नन्वानन्दमयशब्दस्य विकारार्थत्वात् कथ ब्रह्मपरत्वमित्याशङ्क्याह—

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

न ब्रह्म आनन्दमयशब्दित, कुतः, विकारशब्दाद्, विकारार्थकमयट्प्रत्ययाद् ब्रह्मणश्चानन्दविकारत्वानुपपत्तेरिति चेन्न । कस्मात्, प्राचुर्यात्, प्रकृते मयट आनन्दप्राचुर्यवाचकत्वादित्यर्थः ॥ १३ ॥

मयटः प्राचुर्यार्थकत्वे हेत्वन्तरमाह—

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

तमानन्दं प्रति 'एष ह्येवानन्दयाति' (तै. २. ७) इति ब्रह्मणो हेतुत्वव्यपदेशादानन्दमयः पर एवेत्यर्थः ॥ १४ ॥

इतश्च आनन्दमयः पर एवेत्याह—

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'सत्यं ज्ञानमनन्त ब्रह्म' (तै. २-१) इत्यस्मिन् मन्त्रे यत् सत्याद्यात्मकं सर्वान्तरं ज्ञेयत्वेनोक्तं तन्मान्त्रवर्णिकं ब्रह्मैव 'आनन्दमयः' (तै. २-५) इति ब्राह्मणे गीयते, मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ॥ १५ ॥

इतश्चानन्दमयः परो न जीव इत्याह—

## नेतरोऽनुपपत्तेः ॥ १६ ॥

ईश्वरादितरो नानन्दमयः, कुतः, अनुपपत्तेः 'सोऽकामयत बहु स्यां प्रजायेय' (तै. २-६) इत्यादिश्रूयमाणस्य सृष्टेः प्राक् कामयितृत्वसृष्टत्वात्मकत्वादेरनुपपत्तेरित्यर्थः ॥१६ ॥

इतश्चानन्दमयो न जीव इत्याह—

**भेदव्यपदेशाच्च ॥ १७ ।**

'रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति' (तै. २-७) इति लब्धृलब्धव्यत्वेन जीवानन्दमययोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः ॥ १७ ॥

ननु तर्ह्यानन्दमयशब्देन प्रधानमुच्यता, तत्राह—

**कामाच्च नानुमानापेक्षा ॥ १८ ॥**

अनुमीयत इत्यनुमानम् अनुमानैकगम्यं प्रधानम् । तस्य नापेक्षा आनन्दमयत्वेनात्र न स्वीकारः । कुतः, कामात् तदधिकारे 'सोऽकामयते'ति कामयितृत्वश्रवणादित्यर्थः । अत्र प्रधाननिराकरणं प्रासङ्गिकमिति बोध्यम् ॥ १८ ॥

इतश्च नानन्दमयो जीव इत्याह—

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥**

अस्मिन्नानन्दमये प्रकृत आत्मनि प्रबुद्धस्यास्य जीवस्य तद्योगं, तदात्मना योगस्तद्योगस्तद्भावापत्तिर्मुक्तिः, तं 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते' (तै. २-७) इत्यादि शास्त्रं शास्ति । तस्मान्नानन्दमयो जीवः, किन्तु परमात्मैवेत्यर्थः ॥ १९ ॥

इदन्त्वेकदेशीयमतम् । भगवत्पादीयमते त्वित्थं सूत्रयोजना—आनन्दमयोऽभ्यासात् । ईक्षत्यधिकरणे मुख्येक्षणाद् ब्रह्मनिर्णये गौणप्रायपाठस्यानिश्चायकत्वं यथा, न तथेहाधारत्वावयवत्वयोः पुच्छशब्दलक्षकत्वसाम्यादवयवप्रायपाठस्यानिश्चायकत्वमस्तीति तेनास्य प्रत्युदाहरणसङ्गतिः । फलं त्वधस्तादनन्तरोदितम् । 'ब्रह्म-पुच्छं प्रतिष्ठे'त्यत्र किमानन्दमयावयवत्वेन ब्रह्मोच्यते, उत स्वप्रधानत्वेनेति सन्देहेऽवयवत्वेनेति पूर्वः पक्षः । **सिद्धान्तस्तु** सौत्रानन्दमयशब्देनानन्दमयवाक्यस्थब्रह्मपुच्छमित्यत्रत्यब्रह्मशब्द उपलक्ष्यते । स स्वप्रधानब्रह्मपरः, कुतः, अभ्यासात् तस्यैव 'असन्नेव स भवति' (तै. २ ६.) इति श्लोके अभ्यस्यमानत्वादित्यर्थः । यत्तु पुच्छशब्दस्यावयवपरत्वमिति तत्राह—विकारशब्दान्नेति चेन्न प्राचुर्यात् । विकारशब्दादवयवपरपुच्छशब्दात् तत्समानाधिकरणब्रह्मशब्दो न स्वप्रधानब्रह्मपर इति चेन्न, प्राचुर्याद् , अवयवप्रायप्रयोगात् पुच्छमित्युच्यते, नावयवविवक्षया । अतः प्रतिष्ठासमभिव्याहारात् पुच्छशब्दस्याधारपरतया स्वप्रधानत्वेन ब्रह्मोच्यत इत्यर्थः । इतश्च पुच्छशब्दस्याधारपरत्वमित्याह—तद्धेतुव्यपदेशाच्च । तस्य ब्रह्मणः स्वविकारजातं प्रति हेतुत्वेन 'इदं सर्वमसृजत' (तै. २-६) इति वाक्ये व्यपदेशादित्यर्थः । इतश्च पुच्छवाक्ये ब्रह्म स्वप्रधानमित्याह—मान्त्रवर्णिकमेव च गीयते । यत् 'सत्यं ज्ञानमनन्त'मित्यादिमन्त्रवर्णप्रतिपाद्यं ब्रह्म, तदेव 'ब्रह्मपुच्छम्' (तै. २-५-२) इति ब्राह्मणवाक्ये स्वप्राधान्येन गीयते । मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः । ननु पुच्छवाक्ये

आनन्दमय' स्वप्रधानत्वेन प्रतिपाद्य किं न स्याद् इत्यत आह—नेतरोऽनुपपत्तेः । इतर आनन्दमयोऽत्र न प्रतिपाद्यः । प्रियादिमत्त्वेनाग्रिमवाक्योक्तस्रष्टृत्वाद्यनुपपत्ते-रित्यर्थः । हेत्वन्तरमाह—भेदव्यपदेशाच्च । 'रस ह्येवाय लब्ध्वानन्दी भवति' (तै २-७) इत्यानन्दमयब्रह्मणोर्लब्धृलब्धव्यत्वेन रूपेण भेदव्यपदेशादित्यर्थ. । ननु 'आनन्दो ब्रह्म' इत्यत्रत्यानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वमनुमीयत इत्यत आह—कामाच्च नानुमानापेक्षा । काम्यत इति काम आनन्दः । तस्य ब्रह्मत्वदर्शनात् नानुमानेनानन्दमयस्यापि ब्रह्मत्वमपेक्षितव्य, ।विकारार्थमयट्समवधानादित्यर्थ' । इतोऽपि नानन्दमयोऽत्र प्रतिपाद्य इत्याह—अस्मिन्नस्य च तद्योगं शास्ति । अस्मिन् पुच्छवाक्योक्ते ब्रह्मणि प्रबुद्धस्यास्यानन्दमयस्य 'यदा ह्येव' (तै. २-७) इति शास्त्रं तद्योग तद्भावापत्ति शास्ति । अतोऽत्रानन्दमयस्याप्रतिपाद्यत्वात् पुच्छब्रह्मैव स्वप्रधानं निर्विशेष ज्ञेयमिति सिद्धम् ॥ १९ ॥

( ७ अन्तरधिकरणम् )

इत्थं पूर्वसिद्धनिर्विशेषब्रह्मसमन्वयापवादमाह—

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

पूर्वं ब्रह्मपदानन्दमयपदतदभ्यासादितो निर्विशेषब्रह्मनिर्णयो यथा, तथा रूपवत्त्वादिबहुप्रमाणवशात् ससारी हिरण्मय. पुरुषोऽस्त्विति पूर्वसिद्धान्तयुक्त्या पूर्वपक्षोत्थानात् तेनास्य दृष्टान्तसङ्गतिः । फलन्तु पूर्वोत्तरपक्षयोरपरपरब्रह्मोपास्तिरेवेति द्रष्टव्यम् । छान्दोग्ये (१-६-६) श्रूयते—'अथ य एषोऽन्तरादित्ये हिरण्मय' इत्यादि। तत्र किमयं पुरुषो विद्याकर्मातिशयवशात् प्राप्तोत्कर्षः कश्चित् संसारी उत नित्यसिद्धः परमेश्वर इति सन्देहे संसारीति पूर्वः पक्षः । सिद्धान्तस्तु 'य एषोऽन्तरादित्ये' 'य एषोऽन्तराक्षिणि' (छा. १-७-५) इति च श्रूयमाणः परमेश्वर एव, न संसारी। कुतः, तद्धर्मोपदेशात् तस्य परमेश्वरस्य ये सर्वपाप्मराहित्यादिधर्मास्तेषामस्मिन् वाक्य उपदेशात् । हिरण्यश्मश्रुकेशादिक तु मायिक परमेश्वरस्य लोकानुग्रहार्थमुपपद्यत इत्यविरोधः । तस्मादक्ष्यादित्ययोरन्तः परमेश्वर एवेत्यर्थः ॥ २० ॥

किञ्च—

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

आदित्याक्ष्णोरन्तः श्रूयमाणः पुरुष आदित्यशरीराभिमानिनो जीवादन्यः, कुतः, भेदव्यपदेशाद् आदित्यशरीराभिमानिनो जीवादन्यस्य परमात्मनोऽन्तर्यामितया 'य आदित्ये तिष्ठन्' (बृ. ३-७-९) इत्याद्यन्तर्यामिब्राह्मणे तयोर्भेदव्यपदेशादत्राप्यन्तरशब्दश्रुत्या तत्प्रत्यभिज्ञानात् परमेश्वर एवाक्ष्यादित्ययोरुपास्य इति सिद्धम् ॥ २१ ॥

* ८ आकाशाधिकरणम् *

ननु पूर्वत्राव्यभिचरितापहतपाप्मत्वादिब्रह्मलिङ्गवत्त्वेन रूपवत्त्वादिकमन्यथा नीत यथा, न तथेह लिङ्गादाकाशशब्दश्रुतिरन्यथा नेतुं शक्या, तस्या बलवत्त्वाद् इत्यत आह—

आकाशस्तल्लिङ्गात् ॥ २२ ॥

पूर्वेणास्य प्रत्युदाहरणसङ्गतिः। फलं तु पूर्वपक्षे भूताकाशदृष्ट्योद्गीथोपास्तिः, सिद्धान्ते ब्रह्मदृष्ट्येति द्रष्टव्यम्। छान्दोग्ये (१-९-१) श्रूयते—'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यादि। तत्र किमाकाशशब्देन भूताकाशोऽभिधीयते उत परं ब्रह्मेति संशये भूताकाश इति पूर्वः पक्षः। सिद्धान्तस्तु आकाशशब्देन ब्रह्मैव गृह्यते। कुतः, तल्लिङ्गात् तस्य ब्रह्मणो यल्लिङ्गं समस्तमहाभूतसृष्ट्यादिकं तस्यास्मिन् वाक्ये दृष्टत्वात्। यल्लिङ्गाच्छ्रुतिर्बलीयसीति, तत्र, भूयसीनां ब्रह्मलिङ्गश्रुतीनामनुग्रहायैकस्या आकाशश्रुतेर्बाधस्य युक्तत्वात्। अत आकाशशब्दित ब्रह्मैवात्रोद्गीथ उपास्यमिति सिद्धम् ॥ २२ ॥

* ९ प्राणाधिकरणम् *

आकाशन्यायमन्यत्राप्यतिदिशति—

अत एव प्राणः ॥ २३ ॥

अत्रातिदेशत्वात् पृथक् सङ्गतिर्नापेक्षिता। यद्वा पूर्वमाकाशश्रुतेरव्यभिचारिब्रह्मलिङ्गाद्बाधो यथा युक्तः, न तथेह प्राणश्रुतेर्बाधो युक्तः संवेशनादिलिङ्गस्य प्राणसाधारणतया ब्रह्माव्यभिचाराभावादिति प्रत्युदाहरणसङ्गतिः। फलन्तु पूर्वपक्षे प्राणदृष्ट्या प्रस्तावोपास्तिः, सिद्धान्ते तु ब्रह्मदृष्ट्येति। छान्दोग्ये (१-११-४,५) श्रूयते—'उद्गीथे प्रस्तोतर्या देवते'ति प्रस्तुत्य 'कतमा सा देवतेति, प्राण इति होवाचे'-त्यादि। तत्र प्राणशब्देन ब्रह्माभिधीयते उत वायुविकार इति सन्देहे वायुविकार इति पूर्वः पक्षः। सिद्धान्तस्तु प्राणशब्देन ब्रह्मैवाभिधीयते। कुतः, अत एव पूर्वसूत्रोक्ततल्लिङ्गादेव, तस्य ब्रह्मणो यल्लिङ्गं 'प्राणमेवाभिसंविशन्ति' (छा. १-११-५) इत्यादि सर्वभूतसंवेशनादिकं, तस्यास्मिन् वाक्ये दृष्टत्वात्। न च 'प्राणं तर्हि वागप्येति' (श. ब्रा. १०-३-३-६) इत्यादिना वायुविकारेऽपि श्रुतमिति वाच्यम्। तत्रेन्द्रियसंवेशनादेरेवं श्रुतत्वात्। अतोऽनन्यथासिद्धब्रह्मलिङ्गात् प्राणशब्दाभिधेयं ब्रह्मैवोपास्यमिति सिद्धम् ॥ २३ ॥

* १० ज्योतिरधिकरणम् *

पूर्वं प्राणवाक्ये ब्रह्मलिङ्गसद्भावाद् ब्रह्मपरता यथा, न तथेह स्ववाक्ये ब्रह्मपरता तदभावादिति प्रत्युदाहरणसङ्गत्येदमाह—

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

अत्र पूर्वपक्षे कौक्षेये ज्योतिष्यादित्यदृष्ट्योपास्तिः सिद्धान्ते ब्रह्मदृष्टेति फलम्। छान्दोग्ये(३-१३-७) श्रूयते—'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादि। तत्र किं ज्योतिश्शब्देनादित्यादिकं तेजोऽभिधीयते उत ब्रह्मेति संशये आदित्यादिकमिति पूर्वः पक्षः। सिद्धान्तस्तु दिवो ज्योतिरिति ज्योतिश्शब्देन ब्रह्मैव गृह्यते। कुतः, चरणाभिधानाद् ज्योतिर्वाक्यात् पूर्ववाक्ये 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'(छा. ३-१२-६.) इति चतुष्पात्त्वाभिधानात् । अतो ब्रह्मैव ज्योतिश्शब्दितमित्यर्थः ॥ २४ ॥

ननु 'गायत्री वा इदं सर्वम्' (३-१२-१) इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात् तस्यैवोपास्यत्वं नान्यस्येत्याशङ्क्याह—

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण-**
**निगदात् तथा हि दर्शनम् ॥ २५ ॥**

छन्दोऽभिधानाद् गायत्र्याख्यच्छन्दस एवाभिधानात् पूर्ववाक्ये न ब्रह्मणः प्रकृतत्वमिति चेन्न कुतः, तथा, छन्दोद्वारेण तद्गते ब्रह्मणि चेतोऽर्पणस्य चित्तसमाधानस्य निगदादभिधानात् । तत्र दृष्टान्तः तथा हि दर्शनम् । अन्यत्रापि विकारद्वारेण 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' (ऐ.आ. ३-२-३-१२) एतमात्मानं प्रधाने शस्त्रे तदनुगतमुपासते इति ब्रह्मण उपासनं दृश्यत इति दर्शनं दृष्टमित्यतो ब्रह्मैव पूर्ववाक्ये निर्दिष्टं न च्छन्द इति सिद्धम् ॥ २५ ॥

इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्याह—

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥**

भूतपृथिवीशरीरहृदयैश्चतुष्पदा गायत्रीति व्यपदेशस्य ब्रह्मण्येवोपपत्तेः । न ह्यक्षरसन्निवेशरूपगायत्र्या भूतादिपादव्यपदेशः सम्भवति । अतो गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमिति ज्योतिर्वाक्ये द्युसम्बन्धात् तदेव प्रत्यभिज्ञायत इति सिद्धम् ॥ २६ ॥

ननु पूर्वं दिवीति सप्तम्या द्यौराधारत्वेन निर्दिश्यते । दिव इति पञ्चम्या द्यौरवधित्वेन । तथा च विभक्तिभेदेन द्युसम्बन्धात् प्रत्यभिज्ञानमुक्तं नेत्याशङ्क्याह—

**उपदेशभेदान्नेति चेन्न उभयस्मिन्नप्यविरोधात् ॥ २७ ॥**

दिवि दिव इति विभक्तिभेदेनोपदेशाज्ज्योतिर्वाक्ये प्रत्यभिज्ञानं न सम्भवतीति चेन्न। कुतः, उभयस्मिन्नपि विभक्तिभेदेनोपदेशद्वयेऽपि प्रधानप्रातिपदिकार्थेन प्रत्यभिज्ञाया अविरोधात्। प्रकृतत्रिपाद्ब्रह्मपरामर्शियच्छब्दानुबन्धात् परं ब्रह्मैव ज्योतिश्शब्दितमुपास्यमिति सिद्धम् ॥ २७ ॥

११ प्रातर्दनाधिकरणम् ९

पूर्वस्मिन्नधिकरणे प्रकृतत्रिपाद्ब्रह्मपरामर्शियच्छब्दसमानाधिकरणकृता ज्योतिश्श्रुतिस्तदर्थेत्युक्त यथा, न तथेहासाधारणं किञ्चित् स्वास्ति प्राणस्य ब्रह्मत्वे मानं, येन तथा स्यादिति प्रत्युदाहरणसङ्गत्येदमाह—

## प्राणस्तथानुगमात् ॥ २८ ॥

अत्र पूर्वपक्षे प्राणेन्द्रदेवताजीवानामन्यतमोपास्ति. सिद्धान्ते ब्रह्मधीरिति फलभेदः। कौषीतक्युपनिषदि (३-१,२,३) इन्द्रप्रतर्दनाख्यायिकायां प्रतर्दनं प्रतीन्द्रवाक्यं श्रूयते—'प्राणोऽस्मि प्रज्ञात्मे'त्यादि। तत्र किं प्राणशब्देन वायुमात्रमभिधीयते उतेन्द्रदेवता उत जीवः अथवा परं ब्रह्मेति संशये 'अथ खल्वि'त्यादिलिङ्गाद् वायुमात्रमिति पूर्वः पक्षः। सिद्धान्तस्तु प्राणशब्देन ब्रह्मैवाभिधीयते। कुतः, तथानुगमात् तथा ब्रह्मपरत्वे 'हिततमं मन्यसे' इत्यादिहिततमत्वाद्यनेकलिङ्गानामनुगमादवगमात्। अतोऽत्र प्राणो ब्रह्मैवेत्यर्थः ॥ २८ ॥

ननु अस्मीत्यहङ्कारवादलिङ्गादिन्द्रदेवताभिधीयतेत्याशङ्क्याह—

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥

वक्तुरिन्द्रस्य देवताविशेषस्यात्मोपदेशाद् 'मामेव विजानीहि' (कौ. ३-१) इत्यात्मत्वेनोपादिश्यमानत्वात् प्राणो न ब्रह्मेति चेद्, अत्रोच्यते अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति। हि यस्माद् अस्मिन् अध्याये 'यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः' (कौ. ३-२) 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत' इत्यध्यात्मसम्बन्धस्य प्रत्यगात्मसम्बन्धस्य भूमा बाहुल्यमुपलभ्यते। तस्मात् प्राणात्मकब्रह्मोपदेश एवायं न देवताविशेषोपदेश इति सिद्धम् ॥ २९ ॥

कथं तर्हि वक्तुरात्मोपदेशस्तत्राह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रस्य वक्तुः 'मामेव विजानीहि' इत्युपदेशः शास्त्रदृष्ट्या ज्ञातव्यः, अहमेव

परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः । तत्र दृष्टान्तः यथा वामदेवः शास्त्रदृष्ट्याहं मनुरभवमित्याह तद्वत् । इत्यतो ब्रह्मपरमेतद्वाक्यमिति सिद्धम् ॥ ३० ॥

नन्वेवमपि न ब्रह्मपरमिदम्, अपि त्वन्यपरमित्याशङ्क्याह—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ।

'वक्तारं विद्याद्' इति जीवलिङ्गाद् 'इदं शरीर परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गात् तदुभयपर न ब्रह्मपरमेवेति चेन्न । कुतः, उपासात्रैविध्याद् जीवमुख्यप्राणब्रह्मोपासनानि त्रीणि प्रसज्येरन । न च तदिष्टम् । 'मामेवे'त्युपक्रम्य 'प्राणोऽस्मी'त्युक्त्वान्त उपसंहरति 'स एष प्राण एव प्रज्ञात्मे'ति, एवमुपक्रमोपसंहाराभ्यां वाक्यैकवाक्यत्वावगमात् । किञ्च । अन्यत्र ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेराश्रितत्वादिहापि तद्योगाद्रितततमत्वाद्यसाधारणब्रह्मलिङ्गयोगाद् ब्रह्मण एवायमतिदेश इत्यतिशोभनम् ॥ ३१ ॥

अस्मिन् पाद एकादशाधिकरणानि । सूत्राण्येकत्रिंशत् ॥

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

प्रथमाध्यायस्य प्रथमः पादः ।

---

### अथ द्वितीयः पादः ।

( १ सर्वत्र प्रसिद्ध्यधिकरणम् )

इत्थं पूर्वस्मिन् पादे स्पष्टब्रह्मलिङ्गवाक्यानां ब्रह्मणि समन्वयः साधितः । अधुना अस्पष्टब्रह्मलिङ्गाना समन्वयं साधयितुं द्वितीयतृतीयपादावारभ्येते । पूर्वस्मिन् पादे जगत्कारणत्वेन व्यापित्वादिकमर्थसिद्धम् । तदुपजीव्योत्तरपादद्वयस्योत्थानाद्धेतुहेतुमद्भाव सङ्गतिः । अस्य पूर्वपादेन यथा पूर्वं जीवादिलिङ्गबाधया ब्रह्मपरत्वमुक्तं, न तथेह मनोमयादिवाक्ये ब्रह्मलिङ्गमस्तीति प्रत्युदाहरणसङ्गत्येदमारभते—

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

अस्ति पूर्वपक्षे जीवस्योपास्तिः, सिद्धान्ते ब्रह्मण इति फलम् । छान्दोग्ये(३-१४-१,२) शाण्डिल्यविद्यायामिदमाम्नायते— 'स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो

भारूप' इत्यादि । तत्र किं मनोमयत्वादिगुणकः शारीर उपास्यत्वेनोपदिश्यते, किं वा परमात्मेति संशये शारीर इति पूर्वः पक्षः । सिद्धान्तस्तु परब्रह्मैवोपास्यत्वेनोपदिश्यते । कुतः, सर्वत्र प्रसिद्धोपदेशात् सर्वेषु वेदान्तेषु यत् प्रसिद्धं जगत्कारणं ब्रह्म तस्यैवात्र 'सर्वं खल्वि'त्यादिनोपदेशादित्यर्थः ॥ १ ॥

इतश्च ब्रह्मैवात्रोपदिश्यत इत्याह—

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षिताः 'भारूपः सत्यसङ्कल्पः' इत्यादिनोपासनायामुपादेयत्वेनोपदिष्टा ये गुणाः सत्यसङ्कल्पत्वादयस्तेषां ब्रह्मण्येवोपपत्तेरित्यर्थः, जीवसाधारण्येऽपि मनोमयत्वादेः सत्यसङ्कल्पत्वाद्यनुरोधेन सर्वात्मके ब्रह्मण्युपपत्तेः । अतस्तद्गुणकं ब्रह्मैवोपास्यमिति सिद्धम् ॥ २ ॥

ननु विपरीतं किं न स्यादिति चेन्नेत्याह—

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

सत्यसङ्कल्पत्वादीनां जीवे सामञ्जस्येनानुपपत्तेर्न शारीरो जीवस्तद्धर्मेणोपास्यः, किन्तु ब्रह्मैवेत्यर्थः ॥ ३ ॥

इतश्च न शारीर उपास्य इत्याह—

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'एतमितः प्रेत्याभिसम्भवितास्मि' (छा. ३-१४-४) इत्यनेन एतमिति प्रकृतस्य मनोमयत्वादिगुणकस्य ब्रह्मणः कर्मत्वेन प्राप्यत्वेनाभिसम्भवितास्मि प्राप्तास्मीति शारीरस्य कर्तृत्वेन व्यपदिश्यमानत्वादित्यर्थः ॥ ४ ॥

इतश्च न शारीर उपास्य इत्याह—

## शब्दविशेषात् ॥ ५ ॥

समानप्रकरणे 'अन्तरात्मन् पुरुषो हिरण्मय' (शत. ब्रा. १०-६-३-२) इति शारीरस्य यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति, तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः । तस्य सत्त्वात् न परस्मादन्यः शारीर उपास्य इत्यर्थः ॥ ५ ॥

**किञ्च—**

## स्मृतेश्च ॥ ६ ॥

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति' (गी. १८-६१) इत्यादौ जीवपरमात्मनोर्भेदस्मरणान्न परस्मादन्यो जीव उपास्य इति सिद्धम् । अनयोर्भेदस्तु काल्पनिकः न वास्तव इति रहस्यम् ॥ ६ ॥

**अधुना** परमात्मन उपास्यत्वमाक्षिप्य परिहरति—

## अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकौकस्त्वादर्भकमल्पकमोकः स्थानं यस्य सोऽर्भकौकास्तस्य भावस्तत्त्वम् । तस्माद् 'एष आत्मा अन्तर्हृदय' (छा. ३-१४-३) इति परिच्छिन्नहृदयायतनत्वादित्यर्थः । किञ्च तद्व्यपदेशाच्च । तस्य स्वशब्देनैवाणीयानित्यणीयस्त्वव्यपदेशादाराग्रमात्रो जीव इहोपास्यः न सर्वगतः परमात्मेति चेन्न. कुतः, निचाय्यत्वादेवम् एवमर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वेन रूपेण परमात्मन इह निचाय्यत्वादुपास्यत्वात् । अतः सर्वगतस्यात्मन उपासनापेक्षयार्भकौकस्त्वादिगुणः । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तो व्योमवद् । यथा सर्वगतमपि व्योम सूच्याद्यवच्छेदेनार्भकौकोऽणीयश्च व्यपदिश्यते तद्वद् ब्रह्मापीत्यर्थः ॥ ७ ॥

**अधुना** परमात्मनः सर्वगतत्वे दोषमाशङ्क्य परिहरति—

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

व्योमवत् परमात्मनः सर्वगतत्वे चेतनत्वाविशेषाज्जीववत् सुखदुःखानुभवरूपसम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । जीवपरमात्मनोर्भोक्तृत्वाभोक्तृत्वादिविशेषान्न तद्योगेनास्य भोगप्राप्तिः । तस्मान्मनोमयत्वादिगुणकः परमात्मैवोपास्यः, न शारीर इति सुस्थितम् ॥ ८॥

( २ अत्त्रधिकरणम् )

**पूर्वं** यथा ब्रह्मणो भोक्तृत्वाभाव उक्तस्तथा कर्तृत्वाभाव इह ब्रह्मण इति दृष्टान्तसङ्गत्येदमाह—

## अत्ता चराचरग्रहणात् ॥ ९ ॥

अत्र पूर्वपक्षेऽग्नेर्जीवस्य वोपास्तिः सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः। कठवल्लीपु (१-२-२४) श्रूयते— 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इत्यादि। तत्रौदनोपसेचनसूचितः कश्चिदत्ता प्रतीयते स किमग्निरुत जीव उताहो परमात्मेति सशये अग्निजीवाविति पूर्वः पक्षः। सिद्धान्ते तु परमात्मैवात्ता। कुतः, चराचरग्रहणात् चराचरयोस्स्थावरजङ्गमयोरद्यत्वेनास्मिन् वाक्ये ग्रहणात्। न हि परमात्मानं सर्वसंहर्त्तारमृतेऽन्यस्य कस्यचित चराचरात्तृत्वं सम्भवतीत्यर्थः ॥९॥

इतश्च परमात्मैवात्तेत्याह—

## प्रकरणाच्च ॥ १० ॥

'न जायते म्रियते वा विपश्चिद्' (काठ. १-२-१८) इत्यादिना परमात्मनः प्रकरणात् प्रकृतत्वात् 'क इत्था वेद यत्र स' इति दुर्विज्ञेयत्वरूपासाधारणलिङ्गाच्चेत्यर्थः ॥ १० ॥

/ ३ गुहाधिकरणम् /

पूर्वं ब्रह्मक्षत्रपदस्य मृत्युपदसान्निध्यादनित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य सन्निहितगुहाप्रवेशादिना बुद्धिक्षेत्रज्ञपरत्वमस्त्विवति दृष्टान्तसङ्गत्येदमाह—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

अत्र पूर्वपक्षे बुद्धिभिन्नजीवज्ञान, सिद्धान्ते जीवविलक्षणपरमात्मज्ञानमिति फलभेदः। कठवल्लीष्वेव श्रूयते— 'ऋत पिबन्तौ सुकृतस्य लोके' (काठ. १-३-१) इत्यादि। तत्र किं बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति सन्देहे बुद्धिजीवाविति पूर्वः पक्षः। सिद्धान्तस्त्विह गुहां प्रविष्टौ जीवपरमात्मानावेव। कुतः, आत्मानौ हि, यस्मादात्मानौ चेतनौ ऋतं पिबन्ताविति कर्मफलभोगश्रवणेनैकस्यात्मत्वे द्वितीयस्याप्यात्मत्वं न्याय्यम्। तत्र हेतुस्तद्दर्शनात् संख्याश्रवणे च संख्यावतोरेकरूपत्वस्य लोके दर्शनादित्यर्थः ॥ ११ ॥

इतश्च जीवपरमात्मानावेव गुहां प्रविष्टावित्याह—

## विशेषणाच्च ॥ १२ ॥

'सोऽध्वनः पारमाप्नोति' (का. १-३-९) 'देवं मत्वा धीरो हर्षशोकौ जहाति' (का. १-२-१२) इति जीवपरमात्मनोरेवास्मिन् प्रकरणे गन्तृगन्तव्यभावेन मन्तृमन्तव्यभावेन च विशेषितत्वादित्यर्थः ॥ १२ ॥

४ अन्तराधिकरणम् :

पूर्वं प्राथमिकपिबन्ताविति द्वित्वश्रुत्या चेतनत्वेन तुल्यजीवपरदृष्ट्यनुसारा-चरमश्रुता गुहाप्रवेशादयो नीताः । तर्हि तद्वदेव दृश्यत इति प्राथमिकप्रत्यक्षत्वोक्त्याक्षिप्रतिबिम्बात्मावगत्यनुरोधाच्चरमश्रुता अमृतत्वादयः स्तुत्यर्थत्वेन कथञ्चिन्नेया इति दृष्टान्तसङ्गत्येदमाह—

## अन्तर उपपत्तेः ॥ १३ ॥

अत्र पूर्वपक्षे प्रतिबिम्बोपास्तिः सिद्धान्ते ब्रह्मोपास्तिरिति फलभेदः । उप-कोसलविद्याया छान्दोग्ये (४ १५-१) श्रूयते -'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इत्यादि । तत्राक्ष्यन्तरुपदिश्यमानः प्रतिबिम्बादिरुत परमात्मेति संशये प्रतिबिम्बादिरिति पूर्वः पक्षः । सिद्धान्तस्तु अन्तर अक्षिमध्यगतः पर-मात्मैवोपदिश्यते । कुतः, उपपत्ते आत्मत्वामृतत्वाभयत्वादीनामिहोक्तानां परमात्म-न्येवोपपत्तेः । 'एतं संयद्वाम इत्याचक्षते' (छा. ४-१५-२) इत्यादिर्निर्दिष्टसंयद्वा-मत्वादीनां च परमात्मन्येव न प्रतिबिम्बेऽन्यत्र वोपपत्तिः । अतोऽक्ष्यन्तरः पुरुषः पमात्मैवेत्यर्थ ॥ १३ ॥

ननु सर्वगतस्याल्पमक्षि स्थानं न सम्भवतीति पूर्वपक्षबीजं दूषयन्निदमाह—

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

'यश्चक्षुषि तिष्ठन' (बृ. ३-७-१८) इत्यादिचक्षुरादीनि स्थानान्यादयो येषा 'तस्योदिति नाम' 'हिरण्यश्मश्रु' (छा. १-६-७,६) इत्यादिनामरूपाणां तेषामुपासनार्थत्वेन व्यपदेशादिहापि परमात्मनोऽक्षिस्थानादिव्यपदेशो नानुपपन्न इत्यर्थः ॥ १४ ॥

प्रकरणादप्यक्षिस्थः परमात्मैवोपदिश्यत इत्याह—

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा. ४-१०-५) इ (व स्मृ ?) तिवाक्योपक्रमे श्रूयमाणं यत् सुखविशिष्टं ब्रह्म तस्यैवेहाभिधानादित्यर्थः ॥ १५ ॥

प्रकरणादक्षिस्थस्य ब्रह्मत्वमभिधाय लिङ्गादपि तदाह—

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुता उपनिषद् रहस्यविज्ञानं यस्य स तथा। तस्य ब्रह्मविदो या गतिर्देवयानाख्या 'अथोत्तरेण तपसा ब्रह्मचर्येण' (प्रश्न. १-१०) इत्यादिश्रुतौ 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' (गी. ८-२४) इति स्मृतौ च प्रसिद्धा, तस्या गतेरिहापि 'आदित्याच्चन्द्रमसम्' (छा. ४-१५-५) इत्यादावभिधानादाक्षिस्थस्य ब्रह्मत्वं निश्चीयत इत्यर्थः ॥ १६ ॥

इत्थं सिद्धान्तमभिधाय पूर्वपक्षं प्रत्याह—

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

उपासकस्य सर्वत्राक्षिण प्रतिबिम्बसम्पादकबिम्बभूतपुरुषान्तरस्यानवस्थानादसम्भवाच्चामृतत्वादिगुणाना नच्छायात्मादिरितरः । अतः परमात्मैवाक्षिस्थान उपदिश्यत इति सिद्धम् ॥ १७ ॥

( ५ अन्तर्याम्यधिकरणम् )

पूर्वं 'स्थानादिव्यपदेशाच्च' इति सूत्रे 'यः पृथिव्यां तिष्ठन्' इत्यन्तर्यामिब्राह्मणस्थं 'यश्चक्षुषि तिष्ठन्' इत्यादिवाक्यमन्तर्यामिणो ब्रह्मत्वं सिद्धवत्कृत्योदाहृतम् । तदाक्षिप्य समाधत्त इत्याक्षेपसङ्गत्येदमाह—

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

अत्र पूर्वपक्षे प्रधानस्य योगिनो जीवस्य वोपास्तिः सिद्धान्ते परमात्मन एवेति फलभेदः । बृहदारण्यके (३-७-३) श्रूयते— 'यः पृथिव्यां तिष्ठन्' 'पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत' इत्यादि । तत्रान्तर्यामी प्रधानम् उत त्वणिमादिविशिष्टो जीव उताहो परमात्मेति संशये प्रधानजीवाविति पूर्वः पक्षः । सिद्धान्तस्त्विहाधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव । कस्मात्, तद्धर्मव्यपदेशात् तस्य परमात्मनो ये धर्माः सर्वान्तर्यामित्वात्मत्वामृतत्वादयोऽसाधारणास्तेषामिह व्यपदेशादित्यर्थः ॥ १८ ॥

ननु प्रधानमन्तर्याम्यस्त्वित्याशङ्क्याह—

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं साङ्ख्यस्मृतिकल्पितं प्रधानं नान्तर्यामि । कुतः, अतद्धर्माभिलापात् । तच्छब्देन प्रधानमुच्यते । न तद् अतत् प्रधानभिन्नपरमात्मा तस्यैव चेतनस्य ये धर्मा 'अदृष्टो द्रष्टा अश्रुतः श्रोता' (बृ. ३-७-२३) इति वाक्यशेषे श्रूयमाणा अदृष्टत्वादयस्तेषामिहाभिलापाद् अभिधानादित्यर्थः ॥ १९ ॥

नन्तु तर्हि चेतनो जीवो योगी भवत्वन्तर्यामीत्यत आह—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

शारीरो नान्तर्यामीति पूर्वसूत्रान्नञोऽनुषङ्गः। कस्माद्। उभयेऽपि 'यो विज्ञाने तिष्ठन्' (बृ.३ ७-२२) इति काण्वाः । 'य आत्मनि तिष्ठन्नि'ति माध्यन्दिनाः, तेऽप्यन्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते। अतोऽधिदैवादिष्वन्तर्यामी परमात्मैवेति सिद्धम् ॥ २० ॥

' ६ अदृश्यत्वाधिकरणम् '

पूर्वं प्रधानविरोधिद्रष्टृत्वादिधर्मवशान्न प्रधानमन्तर्यामीत्युक्तम् । तर्हि तद्विरोधिधर्माणामत्राश्रवणात् प्रधानमेवादृश्यत्वादिगुणको भूतयोनिः स्यादिति प्रत्युदाहरणसङ्गत्येदमाह —

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

पूर्वपक्षे प्रधानस्य शारीरस्य वा ध्यानं सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति फलभेदः । मुण्डके (१-१ ५,६) श्रूयते—'यत्तदद्रेश्यमग्राह्यम्' 'तदव्ययं यद् भूतयोनि परिपश्यन्ति धीराः' इति । तत्र किमदृश्यत्वादिगुणको भूतयोनिः प्रधानम्, उत शारीरः, किं वा परमात्मेति सन्देहे प्रधानशारीराविति पूर्वः पक्षः । सिद्धान्तस्तु 'यत्तदद्रेश्य'मित्यादौ श्रुता अदृश्यत्वादयो गुणा यस्य सोऽदृश्त्वादिगुणको भूतयोनिः परमात्मैव । कस्माद्, धर्मोक्तेः 'यः सर्वज्ञः सर्वविद्' (मु. १. १. ९) इत्यादिश्रूयमाणसर्वज्ञत्वादेः परमेश्वरधर्मस्य भूतयोनौ निर्देशात् । न ह्यचेतने प्रधाने किञ्चिज्ज्ञे शारीरे वा सर्वज्ञत्वादिधर्मः सम्भवति, येन भूतयोनिः स्यात् । अतो भूतयोनिः परमात्मैवेत्यर्थः ॥ २१ ॥

भूतयोनेः परमात्मत्वे हेत्वन्तरमाह—

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

विशेषणं च भेदव्यपदेशश्च विशेषणभेदव्यपदेशौ ताभ्यामितरौ प्रधानजीवौ न भूतयोनी भवतः । तत्र 'दिव्यो ह्यमूर्तः पुरुषः' (मु. २. १. २) इत्यादिना दिव्यत्वादिविशेषणश्रवणान्न जीवः । 'अक्षरात् परतः पर' इत्यक्षरस्याव्याकृतस्य परमात्मनश्च भेदेन व्यपदिष्टत्वान्न प्रधानं भूतयोनिः, अपि तु परमात्मैवेत्यर्थः ॥

भूतयोनेः परमात्मत्वे हेत्वन्तरमाह—

## रूपोपन्यासाच्च ॥ २३ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' (मु. २. १. ४) इत्यादिसर्वकार्यात्मकरूपस्योपन्यासात् परमात्मैव भूतयोनिरिति वृत्तिकारमतम् । 'पुरुष एवेदं विश्वं कर्म' (मु. २. १. १०) इत्यादिसर्वात्मकरूपोपन्यासात् परमात्मैव भूतयोनिरिति भगवत्पादीयमतम् ॥ २३ ॥

॥ ७ वैश्वानराधिकरणम् ॥

पूर्वं रूपोपन्यासप्रसङ्गात् त्रैलोक्यदेही वैश्वानरोऽत्र स्मृतो विचार्यत इति प्रसङ्गसङ्गत्येदमाह । यद्वा पूर्वमुपक्रमस्थादृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्थसर्वज्ञत्वादिलिङ्गेन ब्रह्मनिष्ठत्वमुक्तम् । तद्वदत्राप्युपक्रमस्थसाधारणवैश्वानरशब्दस्य वाक्यशेषस्थहोमाधारत्वलिङ्गेन जाठरादिनिष्ठत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

अत्र पूर्वपक्षे जाठरादेरुपास्तिः सिद्धान्ते ब्रह्मण इति फलभेदः । छान्दोग्ये (५. ११. १, ६)वैश्वानरविद्यायां 'को न आत्मा किं ब्रह्म' इति । 'आत्मानमेवेदं वैश्वानरम्' इति चोपक्रम्याम्नायते-- 'यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यादि । तत्र किं वैश्वानरो जाठराग्निः, उत भूताग्निः, उतादित्यादिदेवताः, उताहो शारीरः, आहोस्वित् परमेश्वर इति विशये जाठरादीति पूर्वः पक्षः । सिद्धान्तस्तु वैश्वानरः परमात्मैव । कुतः, साधारणशब्दविशेषात् साधारणशब्दयोर्विशेषस्तस्मादित्यर्थः । जाठरभूताग्न्यादित्यदेवतासु साधारणो वैश्वानरशब्दः । जीवपरमात्मनोः साधारण आत्मशब्दः । तयोर्वैश्वानरात्मशब्दयोरुभयत्र साधारणयोरपि सतोः परमात्मपरत्व एव विशेषोऽवगम्यते । 'तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः' (छा. ५. १८. २) इत्यादावुक्तद्युमूर्धत्वादेः सर्वात्मकपरत्व एवोपपन्नतरत्वात् । तस्माद् वैश्वानरः परमात्मैव न जाठरः चरमश्रुतहोमाधारत्वापेक्षया प्रथमश्रुतद्युमूर्धत्वादेर्बलवत्त्वादिति सिद्धम् ॥ २४ ॥

स्मृत्या च श्रुत्यर्थः शक्यो निर्णेतुमित्याह—

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

वैश्वानरस्य परमात्मपरत्वे स्मर्यमाणं 'यस्याग्निरास्यं द्यौर्मूर्धा' इति स्मृत्युक्तं त्रैलोक्यात्मकं रूपमनुमानं स्याद् अनुमापकलिङ्गं स्यादित्यर्थः । एवञ्च

स्मृतौ परमेश्वरस्यैवोक्तत्वात् तन्मूलभूतश्रुतौ विद्यमानवैश्वानरशब्दः परमात्मपर एवेति तात्पर्यम् । सौत्र इति शब्दो हेतौ । यस्मादेवं लिङ्गमस्ति तस्माद् वैश्वानरः परमात्मैवेति सिद्धम् ॥ २५ ॥

सिद्धान्तं विधान्तरेणाक्षिप्य समाधातुमाह—

## शब्दादिभ्योऽन्तः*प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥

शब्दस्तावद्वैश्वानरशब्दो न परमात्मपरः, जाठरादौ रूढत्वात् । आदिशब्देन 'हृदयं गार्हपत्यः' (छा. ५. १८. २) इत्यग्नित्रेताकल्पनं 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' (छा. ५. १९. १) इत्यादिना प्राणाहुत्याधारतासङ्कीर्तनं च गृह्यते । एतेभ्यो हेतुभ्यो जाठर एव वैश्वानरः । किञ्चान्तःप्रतिष्ठानात् 'पुरुषेऽन्तःप्रतिष्ठित वेद' इति वैश्वानरस्यान्तःप्रतिष्ठानश्रवणाद् जाठर एव वैश्वानरो न परमात्मेति चेन्न । कुतः, तथा दृष्ट्युपदेशात् तथा जाठररूपेण परमेश्वरस्य दृष्टेरुपास्तेरुपदेशात् । 'मनोमयः' (छा. ३. १४. २) इत्यादिवत् । यद्वा तथा तस्मिन् जाठरे परमेश्वरदृष्टेरुपदेशात् 'मनो ब्रह्मेत्युपासीत' (छा. ३. १८. १) इतिवत् । ननु जाठर एव मुख्यो वैश्वानरोऽस्तु तत्राह असम्भवात् । 'मूर्धेव सुतेजा' इत्यादेर्जाठरे तावदसम्भवादित्यर्थः । किञ्च पुरुषमपि चैनं वैश्वानरं वाजसनेयिनोऽधीयते—'एतमेवमग्निं वैश्वानर पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' (श. ब्रा. १०. ६. १. ११) इति । अतः परमेश्वरस्य सर्वात्मकतया पुरुषविधत्वाद्युपपत्तेर्वैश्वानर. परमात्मैवेति सिद्धम् ॥ २६ ॥

इत्थं द्युमूर्धत्वादिविशेषस्य जाठरविषयत्वं सन्दूष्य देवतादिविषयत्व दूषयितुमाह—

## अत एव न देवताभूतं च ॥ २७ ॥

देवता च भूतं च देवताभूतम् एकवद्भावाद् । उभयमपि न वैश्वानरः । कुतः, अत एव उक्तेभ्यो हेतुभ्यः । न हि विकारस्य भूताग्नेर्विकारान्तरलोकाद्यात्मकत्वं सम्भवति । न च देवताया ऐश्वर्ययोगात् तदस्त्विति वाच्यम् । तस्याः परमेश्वराधीनैश्वर्यवत्त्वात् । अतो वैश्वानरः सर्वात्मकः परमात्मैवेत्यर्थः ॥ २७ ॥

पूर्वं जाठरार्थत्व वैश्वानरादिशब्दस्याभ्युपेत्य जाठरोपाधिकं जाठरप्रतीकं वा

* 'प्रतिष्ठानाच्च नेति' इत्येव सूत्रपाठः बहुत्र दृश्यन्ते

ब्रह्मोपास्यमित्यभिहितम् । अधुना विनैवोपाधिकल्पना साक्षादेव परमात्मोपासनापरिग्रहे विरोधाभावं जैमिनिराचार्यो मन्यत इत्याह --

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

वैश्वानरस्य पूर्वापरपर्यालोचनया ब्रह्मत्वे निर्णीते विश्वश्चासौ नरश्चेति विश्वनरः सर्वात्मकः, विश्वनर एव वैश्वानर इति योगेन वैश्वानरशब्दो ब्रह्मपरतया नेतव्य इति तात्पर्यार्थः ॥ २८ ॥

ननु परमात्मपरिग्रहे कथं प्रादेशमात्रश्रुतिरित्याशङ्क्य तां व्याख्यातुमाह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनवच्छिन्नस्यापि परमात्मन प्रादेशमात्रत्वमुपपद्यते । कस्मात्, अभिव्यक्तेः । उपासकानामनुग्रहाय परमेश्वरो हृदयादिस्थानेषु प्रादेशपरिमाणोऽभिव्यज्यते किलेत्याश्मरथ्य आचार्यो मन्यत इत्यर्थः ॥ २९ ॥

मतान्तरमाह —

अनुस्मृतेर्बादरिः ॥ ३० ।

प्रादेशमात्रहृदयपुण्डरीकस्थेन मनसानुस्मृतेर्ध्यानात् प्रादेशमात्र इत्युपचर्यत इति बादरिराचार्यो मन्यत इति ॥ ३० ॥

मतान्तरं चाह—

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

मूर्धप्रभृतिचुबुकान्ते प्रादेशमात्रे वैश्वानरस्योपास्यत्वप्रतिपादनात् परमेश्वरस्य प्रादेशमात्रत्वं सम्पन्नं, ततः प्रादेशमात्रत्वसम्पत्तेः प्रादेशमात्रश्रुतिरुपपद्यत इति जैमिनिराचार्यो मन्यते । अस्मिन्नर्थे श्रुत्यन्तरसंवादमाह सूत्रकारः 'तथा हि दर्शयति' 'प्रादेशमात्रमिव ह वै देवास्सुविदिता अभिसम्पन्ना' इत्यादिवाजसनेयिब्राह्मणं मूर्धादिचुबुकान्तेषु द्युप्रभृतीन् पृथिव्यन्तानवयवांस्त्रैलोक्यात्मनो वैश्वानरस्य सम्पादयत् प्रादेशमात्रसम्पत्तिं परमात्मनो दर्शयतीत्यर्थः ॥ ३१ ॥

प्रादेशमात्रश्रुतिः सम्पत्तिनिमित्तेत्यत्र श्रुत्यन्तरमाह—

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

अस्मिन् प्रादेशपरिमाणे मूर्धचुबुकान्तराले एनं परमेश्वरं जाबाला 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः' (२) इत्याद्यमनन्ति । अतः प्रादेशमात्रश्रुतिरुपपन्नेत्यर्थः । तस्मात् सर्वात्मकः परमात्मैवेहोपास्य इत्यतिशोभनम् ॥

अस्मिन् पादे सप्ताधिकरणानि । सूत्राणि द्वात्रिंशत् ॥

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

प्रथमाध्यायस्य द्वितीय· पाद. ।

---

## अथ तृतीयः पादः ।

* १ द्युभ्वाद्यधिकरणम् *

इत्थं द्वितीयपादे अस्पष्टब्रह्मलिङ्गवाक्यानां प्रायश उपास्यत्वेन ब्रह्मणि समन्वयः प्रत्यपादि । अधुना तादृशानां वाक्यानां प्रायशो ज्ञेयत्वेन ब्रह्मणि समन्वयं प्रतिपादयितुं तृतीयः पादोऽयमारभ्यते । वैश्वानराधिकरणे त्रैलोक्यात्मा वैश्वानरः परमात्मेत्यभिहितम् । तर्हि त्रैलोक्यायतनमन्यदित्याक्षिप्य समाधानादाक्षेपसङ्गत्योपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थद्युमूर्धत्वादिना ब्रह्मपरत्वमुक्तं तद्वदत्राप्युपक्रमस्थसाधारणामृतत्वस्य 'अमृतस्यैष सेतुः' इति वाक्यशेषस्थसेतुत्वलिङ्गेन परिच्छिन्नप्रधानादिपरत्वमस्त्विति दृष्टान्तसङ्गत्या चेदमधिकरणमारभते —

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

अत्र पूर्वपक्षे प्रधानाद्युपास्तिः सिद्धान्ते ब्रह्मप्रमितिरिति फलभेदः । मुण्डके (२.२.९) श्रूयते — 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' इत्यादि । तत्र द्युभ्वादीनामोतत्वेन किञ्चिदायतनं प्रतीयते तत् किं प्रधानम्, उत जीवः, आहोस्विद् ब्रह्मेति संशये प्रधानमिति पूर्वः पक्षः । सिद्धान्तस्तु द्युभ्वाद्यायतनं द्यौश्च भूश्च द्युभ्वौ । द्युभ्वावादी यस्य द्यौः पृथिव्यन्तरिक्षमित्येवमात्मकस्य तद् द्युभ्वादि । तस्यायतनमधिष्ठानं ब्रह्मैव । कुतः, स्वशब्दात् स्वस्य परब्रह्मणो वाचको य आत्मशब्दः 'तमेवैकं जानथ आत्मानम्' इति श्रुत तस्मादित्यर्थः । एवञ्चोपक्रमस्थसाधारणायतनत्वस्य गौणसेतुत्वलिङ्गात् पृथक्छ्रुतात्मश्रुत्या ब्रह्मपरत्वमेव न प्रधानादिपरत्वमिति भावः ॥ १ ॥

द्युभ्वाद्यायतनं ब्रह्मेत्यत्र हेत्वन्तरमाह —

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । भावप्रधानोऽयं निर्देशः । तथा च 'तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्' (मु. ३. २. ८) इति ब्रह्मणोऽविद्यातत्कार्यसकलानर्थोच्छेदद्वारा मुक्तप्राप्यत्वस्य व्यपदिश्यमानत्वात् । अतो द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थः ॥ २ ॥

सिद्धान्तमभिधाय प्रधानपक्षं निषेधति—

## नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमीयत इत्यनुमानं साङ्ख्यपरिकल्पितं प्रधानं न द्युभ्वाद्यायतनम् । कस्माद्, अतच्छब्दात् तस्याचेतनस्य प्रधानस्य प्रतिपादकस्तच्छब्दः न तच्छब्दोऽतच्छब्दस्तस्मात् प्रधानप्रतिपादकशब्दश्रवणात् । प्रत्युत तद्विपरीतचेतनप्रतिपादकस्य 'यः सर्वज्ञः सर्ववित्' (मु. १. १. ९.) इत्यादेः शब्दस्य श्रवणादिति ॥

ननु तर्हि शारीरोऽस्तु द्युभ्वाद्यायतनं तस्य चेतनत्वादियोगादित्याशङ्क्याह—

## प्राणभृच्च ॥ ४ ॥

प्राणभृच्छारीरोऽपि न द्युभ्वाद्यायतनम् । कुतः, अतच्छब्दादेव । शारीरस्य सर्वज्ञत्वासम्भवात् तत्साधारण आत्मशब्दोऽतच्छब्द एव ॥ ४ ॥

शारीरनिरासे हेत्वन्तरमाह त्रिभिः सूत्रैः—

## भेदव्यपदेशात् ॥ ५ ॥

'तमेवैकं जानथ' (मु. २. २. ५) इति ज्ञातृज्ञेयभावेन जीवपरयोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः ॥ ५ ॥

## प्रकरणात् ॥ ६ ॥

'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्' (मु. १. १. ३) इत्युपक्रमाद् ब्रह्मण एवेदं प्रकरणम् । न हि शारीरज्ञानात् सर्वविज्ञानं भवति । तस्मात् प्रकरणादपि न शारीर इत्यर्थः ॥ ६ ॥

## स्थित्यदनाभ्यां च ॥ ७ ॥

'द्वा सुपर्णा' (३. १. १) इति मन्त्रे 'अनश्नन्नन्योऽभिचाकशीति' इत्यौदासीन्येन स्थितिः परमात्मनो निर्दिश्यते । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यदनं शारीरस्य । अतः स्थित्यदनाभ्यां न शारीरो द्युभ्वायतनम्, अपि तु परब्रह्मैवेति सिद्धम् ॥ ७ ॥

* २ भूमाधिकरणम् *

पूर्वमात्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । 'तरति शोकमात्मविद्' (छा. ७. १. ३) इत्यत्राब्रह्मणि प्राणेऽप्यात्मशब्दप्रयोगादित्याक्षेपिकसङ्गत्येदमाह—

## भूमा सम्प्रसादादध्युपदेशात्॥ ८ ॥

अत्र पूर्वपक्षे प्राणोपास्तिः सिद्धान्ते ब्रह्मधीः फलमिति भेदः । छान्दोग्ये (७.२३) श्रूयते—'भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति' 'यत्र नान्यत् पश्यति'(छा ७-२४-१) इत्यादि । तत्र किं प्राणो भूमा उत परमात्मेति सन्देहे प्राण इति पूर्वः पक्षः । सिद्धान्तस्तु भूमा परमात्मैव, कुतः, सम्प्रसादादध्युपदेशात् । सम्यक् प्रसीदत्यस्मिन् जीव इति सम्प्रसादः सुषुप्त्यवस्था । तस्यां प्राणो जागर्त्तीति सम्प्रसादशब्देन प्राणोऽभिधीयते, प्राणादधि प्राणोपदेशानन्तरम् 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा. ७. १६. १) इति तुशब्देन प्राणवादस्यानतिवादित्वमभिधाय सत्यशब्दवाच्यपरमात्मवादस्यातिवादित्वं ब्रुवता भूम्न एवोपदिश्यमानत्वात् । 'तरति शोकमात्मविद्' इति प्रश्नवाक्यं आत्मोपक्रमेणात्मप्रकरणात् प्राणसन्निधेर्दुर्बलतया न प्राणो भूमा किन्तु परमात्मैवेति सिद्धम् ॥ ८ ॥

परमात्मनो भूमत्वे युक्त्यन्तरमाह—

## धर्मोपपत्तेश्च ॥ ९ ॥

'यत्र नान्यत् पश्यति' (छा. ७-२४-१) इत्यादिनोक्तानां सर्वव्यवहाराभावादिधर्माणां परमात्मन्येवोपपत्ते. परमात्मैव भूमेत्यर्थः ॥ ९ ॥

* ३ अक्षराधिकरणम् *

पूर्वं सत्यशब्दस्य ब्रह्मणि रूढत्वाद् भूमा ब्रह्मेत्युक्तम् । तद्वदिहाप्यक्षरशब्दस्य वर्णे रूढत्वाद्वर्ण एवाक्षरमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

अत्र पूर्वपक्ष ओङ्काररूपाक्षरोपास्तिः सिद्धान्ते ब्रह्मज्ञानमिति फलभेदः ।

बृहदारण्यके (३. ८. ८) गार्गीं प्रति याज्ञवल्क्य आह— 'एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलम्' इत्यादि। तत्र किमक्षरशब्देन वर्ण उच्यते उत ब्रह्मेति सन्देहे वर्ण इति पूर्वः पक्षः। सिद्धान्तस्तु न क्षरतीत्यक्षरं ब्रह्मैव। कुतः, अम्बरान्तधृतेः 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. ३.८.११) इति पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणादित्यर्थः ॥ १० ॥

नन्वम्बरान्तधारण प्रधानेऽपि सम्भवतीत्यत आह—

## सा च प्रशासनात् ॥११॥

सा च धृतिः परमेश्वरस्यैव कर्म नान्यस्याचेतनस्य, कुतः, प्रशासनाद् 'एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ ३. ८. ९) इत्यादिना प्रशासनश्रवणादित्यर्थः ॥ ११ ॥

प्रधानादिनिरासेन ब्रह्मोपादाने हेत्वन्तरमाह—

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यस्य प्रधानादेर्भावो धर्मः सोऽन्यभावस्तद्व्यावृत्तेः। 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतम्' (बृ. ३-८-११) इत्यादितद्विपरीतधर्मश्रवणान्न प्रधानाद्यक्षरं, ब्रह्मैवेति सिद्धम् ॥ १२ ॥

* ४ ईक्षतिकर्माधिकरणम् ४

पूर्वं वर्णे रूढस्याक्षरशब्दस्य जगद्धृतिलक्षणलिङ्गेन ब्रह्मणि न क्षरतीति योगवृत्तिराश्रिता। तद्वदिहापि देहपरिच्छिन्नफलश्रुतिलिङ्गेन परशब्दस्यापेक्षिकपरत्वविशिष्टहिरण्यगर्भे वृत्तिरास्त्विति दृष्टान्तसङ्गत्येदमाह---

## ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

अत्र पूर्वपक्षे कार्यब्रह्मोपास्तिः सिद्धान्ते परब्रह्मोपास्तिरिति फलभेदः। प्रश्नोपनिषदि (५-२,५) श्रूयते—'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति। तत्र ध्येयं वस्तु किं हिरण्यगर्भाख्यमपर ब्रह्म उत परं ब्रह्मेति संशये अपरमिति पूर्वः पक्षः। सिद्धान्तस्तु स ध्यातव्यः परमात्मैव, कुतः, ईक्षतिकर्मव्यपदेशात् 'परात् परं पुरिशयं पुरुषमीक्षते' इति वाक्यशेषे ध्यातव्यस्येक्षतिकर्मत्वेन व्यपदेशाद् ध्यानेक्षणयोरेकविषयत्वनियमात्। अतः क्रममुक्त्यर्थमोङ्कारावलम्बनेन ध्यातव्यः परमात्मैवेति समञ्जसम् ॥ १३ ॥

※ ५ दहराधिकरणम् ※

पूर्वं परपुरुषशब्दस्य ब्रह्मणि रूढत्वाद् ब्रह्मोपास्यमित्युक्तम्। तद्वदिहाप्याकाशशब्दस्य भूताकाशे रूढत्वात् तस्यैवोपास्यत्वमस्त्विवति दृष्टान्तसङ्गत्येदमाह—

## दहर उत्तरेभ्यः ॥ १४ ॥

अत्र पूर्वपक्षे आकाशाद्युपास्तिः सिद्धान्ते ब्रह्मोपास्तिरिति फलभेदः । छान्दोग्ये (८-१-१) श्रूयते—'अथ यदिदमस्मिन् ब्रह्मपुरे दहर पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश' इत्यादि । तत्र दहरपुण्डरीकेऽन्तर्दहराकाशः श्रुतः । स किं भूताकाश उत जीव उताहो परमात्मेति संशये भूताकाशादिरिति पूर्वः पक्षः । सिद्धान्तस्तु दहराकाशः परमात्मैव, कस्माद्, उत्तरेभ्यः 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते'(छा ८-१-३) 'एष आत्मा अपहतपाप्मा'(छा ८-१-५) इत्यादिवाक्यशेषगतेभ्य आकाशोपमानत्वद्यावापृथिव्यधिष्ठानत्वात्मत्वापहतपाप्मत्वादिहेतुभ्य इत्यर्थः ॥ १४ ॥

दहराकाशस्य परब्रह्मपरत्वे हेत्वन्तरमाह—

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोक न विन्दन्ति'(छा ८-३-२) इति दहरवाक्यशेषे प्रजाशब्दवाच्याना जीवानां प्रत्यहं मुच्यमानानां प्रकृतदहरविषया या गतिर्यश्च ब्रह्मलोकशब्दस्ताभ्यां दहरस्य परब्रह्मतावगम्यते । तथाहि दृष्टं श्रुत्यन्तरे—'सता सोम्य तदा सम्पन्नो भवति'(छा ६-८-१) इति । एवञ्च प्रत्यहं हिरण्यगर्भलोकगमनासम्भवाद् ब्रह्मैव लोक इति सामानाधिकरण्यपरिग्रहे अहरहर्गमनमेव लिङ्गं ज्ञापकम् । चशब्देन निषादस्थपतिन्यायोऽपि सामानाधिकरण्यपरिग्रहे सूचित इति ध्येयम् ॥ १५ ॥

दहरस्य परब्रह्मत्वे हेत्वन्तरमाह द्वाभ्याम्—

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय'इति (छा ८-४-१) श्रुताया धृतेरपि हेतोर्दहराकाशः परमात्मैव । अस्य च सर्वलोकविधारणलक्षणमहिम्नोऽस्मिन् परमात्मनि 'एष भूतपाल एष सेतुर्विधरणे' (बृ. ४-४-२२) इत्यादि श्रुत्यन्तरेऽप्युपलब्धेरित्यर्थः ॥ १६ ॥

प्रसिद्धेश्च ॥ १७ ॥

दहराकाशस्यापि परमात्मन्येव प्रसिद्धेर्लोकरूढ्यपेक्षया 'अकाशो वै नाम नामरूपयोर्निर्वहिता' (छा८-१४) इत्यादिश्रौतरूढेर्बलीयस्त्वाद् दहराकाशः परमात्मैव न भूताकाश इति सिद्धम् ॥ १७ ॥

ननु तर्हि जीवोऽस्त्वित्याशङ्क्याह —

इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥

'एष सम्प्रसाद' (छा ८-३-४) इति सम्प्रसादशब्देनेतरस्याप्यस्मिन् प्रकरणे परामर्शात् स जीवो दहराकाशोऽस्त्विति चेन्न असम्भवाद् जीवे आकाशोपमेयत्वापहतपाप्मत्वादीनामसम्भवादित्यर्थः ॥ १८ ॥

इत्थमभिहितासम्भवस्यासिद्धिमाशङ्क्य परिहरति—

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तराद् 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा ८-७-४) इत्यादिप्रजापतिवाक्याज्जाग्रदाद्यवस्थापन्ने जीवेऽपहतपाप्मत्वादिसम्भवाज्जीव एव दहराकाश इति चेदत्राह आविर्भूतस्वरूपस्तु । तुशब्दो जीवशङ्काव्यावृत्त्यर्थ । यतस्तत्राप्याविर्भूतं पारमार्थिकं स्वरूपमस्येत्याविर्भूतस्वरूपो जीवो विवक्षितः न तु जीवत्वेन रूपेण 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा ८-३-४) इत्युपसंहारदर्शनात् । अतस्तस्य ब्रह्मत्वेनापहतपाप्मत्वादिसम्भव इति जीवत्वेन तदसम्भवान्न पूर्वसूत्रस्थहेतुरसिद्ध इति भावः ॥ १९ ॥

ननु तर्हि 'सम्प्रसाद' इति जीवपरामर्शो व्यर्थः स्यादित्यत आह—

अन्यार्थश्च परामर्शः ॥ २० ॥

जीवपरामर्शः 'अभिनिष्पद्यते' इत्युपसम्पत्तव्यपरमात्मपर एव न जीवप्रतिपादनार्थ इत्यर्थः ॥ २० ॥

जीवपूर्वपक्षबीजमाशङ्क्य परिहरति—

अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २१ ॥

'दहरोऽस्मिन्नन्तराकाश' इत्याकाशस्याल्पत्वश्रवणान्न परमात्मत्वं, किन्तु जीवत्वमिति चेत् तत्र समाधानमुक्तम् 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च' (ब्र. १-२-७) इत्यत्र । तस्माद्दहराकाशः परमात्मैवोपास्य इति सिद्धम् ॥ २१ ॥

* ६ अनुकृत्यधिकरणम् *

पूर्वं 'परं ज्योतिरुपसम्पद्ये'ति वाक्यार्थविचारप्रसङ्गात् 'तच्छुभ्रं ज्योतिषां ज्योतिः' (मु. २-२-९) इति वाक्योक्तपरञ्ज्योतिष्ट्वसाधकं 'न तत्र सूर्य' इत्यादिवाक्यं विचार्यत इति प्रसङ्गसङ्गत्येदमाह—

## अनुकृतेस्तस्य च ॥ २२ ॥

अत्र पूर्वपक्षे अलौकिकतेजस उपास्तिः, सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः । मुण्डके (२-२-१०) श्रूयते—'न तत्र सूर्यो भाति न चन्द्रतारकम्' इत्यादि । तत्र सूर्यादिजगद्भासकतया प्रतीयमानं किं तेजोविशेष उत ब्रह्मेति संशये प्रबलेन तेजसा दुर्बलस्याभिभवदर्शनात् तेजोविशेष इति पूर्वः पक्षः । सिद्धान्तस्तु तथा प्रतीयमानं ब्रह्मैव, कुतः, अनुकृतेः अनुकृतिरनुकरणं तस्मात् 'तमेव भान्तमनुभाति सर्व'मित्यनुभानात् । न हि सूर्यादिकं तेजस्तेजोऽन्तरमनुभाति, लोके तददर्शनात् । तर्हि प्राप्तं स्वतः सूर्यादेर्भानमित्यत्राह तस्य चेति । 'तस्य भासा सर्वमिदं विभाती'ति ब्रह्मभासा भास्यत्वावगमात् । न च विपरीतं किं न स्यादिति वाच्यं, 'तच्छुभ्रं ज्योतिषां ज्योतिरि'ति वाक्योपक्रमे ब्रह्मणः स्वयञ्ज्योतिष्ट्वावगमाद्, 'न तत्रे'ति तच्छब्देन तस्यैव प्रकृतज्योतिषः परामर्शात् । अतः स्वयञ्ज्योतिः सूर्यादिसकलजगदवभासकं ब्रह्मैव न तु लौकिकं तेजः, तस्यात्राप्रकृतत्वादिति सिद्धम् ॥ २२ ॥

अस्मिञ्छ्रुत्युक्तार्थे स्मृतिं दर्शयितुमाह—

## अपि च स्मर्यते ॥ २३ ॥

'न तद् भासयते सूर्यो न शशाङ्को न पावकः । यदादित्यगतं तेजो जगद्भासयतेऽखिलम्' (१५-६) इति भगवद्गीतासु स्मर्यत इत्यर्थः ॥ २३ ॥

* ७ प्रमिताधिकरणम् *

पूर्वमनुभानादिना लिङ्गेन तत्रेति विषयसप्तमीं कृत्वा न भातीत्यादौ णिजध्याहारेण न भासयतीत्यर्थो वर्णितप्रायः । तथेहाप्यङ्गुष्ठमात्र इति परिमाणलिङ्गाज्जीवमादायेशानोऽस्मीति भावयेदिति विध्यध्याहारेणोपास्तिपरमङ्गुष्ठवाक्यमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## शब्दादेव प्रमितः ॥ २४ ॥

अत्र पूर्वपक्षे जीवोपास्तिः, सिद्धान्ते तस्यैव परमात्मतया धीरिति फल-

भेदः। कठवल्लीषु (२. ४. १३) श्रूयते—'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य' इति। तत्र किमिदमङ्गुष्ठवाक्यप्रतिपाद्यं जीवः उत ब्रह्मात्मेति सन्देहे जीव इति पूर्वः पक्षः। सिद्धान्तस्तु प्रमितवाक्यप्रतिपाद्यः प्रत्यगभिन्नपरमात्मैव, कुतः, शब्दादेव 'ईशानो भूतभव्यस्ये'त्यत्रेशानशब्दात्। न चाङ्गुष्ठमात्रजीवलिङ्गविरोधः, लिङ्गश्रुत्योर्विरोधे श्रुतेरेव बलवत्त्वात्। न च परमात्मनोऽङ्गुष्ठमात्रत्वानुपपत्तिः, अङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदबोधनादिति समञ्जसम्॥ २४॥

ननु जीवस्य परमार्थतः सर्वगतब्रह्मत्वेन कथमङ्गुष्ठमात्रत्वमित्यत आह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥

तुशब्दः शङ्कानिरासार्थः। मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात् तदपेक्षया सर्वगतस्यात्मनोऽङ्गुष्ठमात्रत्वं सिद्धम्। अतोऽङ्गुष्ठवाक्ये प्रतिपाद्यः परमात्मैवेति सिद्धम्॥ २५॥

* ८ देवताधिकरणम् *

पूर्वं मनुष्याधिकारं शास्त्रमित्युक्तम्। तर्हि अमनुष्याणा देवादीनामधिकारो न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपसङ्गत्या प्रासङ्गिकसङ्गत्या चेदमाह—

## तदुपर्यपि बादरायणः सम्भवात्॥ २६॥

अत्र पूर्वपक्षे मन्त्राद्यप्रामाण्यादुपगमनादिवाक्यानामपि स्वार्थे तदयोगात् तत्त्वमस्यादेरपि नैक्यनिष्ठतेति फलम्। सिद्धान्ते तत्सर्वसम्भवादैक्यनिष्ठतेति फलम्। बृहदारण्यके (१-४-१०) श्रूयते—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवद्' इत्यादि। तत्र किं देवानां ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु तदुपर्यपि तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यते, कस्मात्, सम्भवाद् अर्थित्वसामर्थ्याद्यधिकारकारणस्य सम्भवादित्यर्थः॥ २६॥

ननु यदीन्द्रादीनां विग्रहवत्त्वेन विद्याधिकारस्तर्हि कर्मणि विरोध इत्याशङ्क्याह—

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥ २७॥

इन्द्रादीनामृत्विगादिवदेकस्य शरीरस्यानेकत्र कर्मणि युगपत्सन्निधानासम्भवात् कर्माणि विरोधः प्रसज्येतेति चेन्न, कस्माद्, अनेकप्रतिपत्तेर्दर्शनाद् एकस्यापीन्द्रस्यानेकेषां शरीराणां युगपत् प्राप्तेः 'स एकधा भवति त्रिधा भवति' (छा. ७-

२६-२) इत्यादिश्रुतौ दर्शनात् । यद्वानेकत्र कर्मण्येक(स्य)प्रतिपत्तिरङ्गभावस्तस्य लोके दर्शनाद् यथा बहुभिर्नमस्कुर्वाणैर्युगपदेको ब्राह्मणो नमस्क्रियमाणो दृश्यते तद्वदित्यर्थः ॥ २७ ॥

ननु मास्तु कर्मणि विरोधः, शब्दे स्यादित्याशङ्क्याह—

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥**

शब्दे वेदवाक्ये अनित्यविग्रहवद्देवादेर्नित्यवेदार्थत्वाङ्गीकारे शब्दस्यार्थेन सह नित्यसम्बन्धाभावेन नित्यानित्यसंयोगविरोध इति चेन्न अतः प्रभवात् । अत एव हि वैदिकाच्छब्दाद् देवादिजगतः प्रभवादुत्पत्तेः । कथ नत्प्रभवत्वं देवादेः, प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम् । 'एत इति वै प्रजापतिर्देवानसृजत' (ताण्ड्य. ब्रा. १२. १. ४) इत्यादिका श्रुतिः 'वेदशब्देभ्य एवादौ' (मनु. १. २१) इत्यादिका स्मृतिः । ताभ्यां नित्यशब्दप्रभवत्वं देवादेरवगम्यते । एवञ्च देवाद्युत्पत्तावपि तन्निष्ठनित्याकृतेर्वेदार्थत्वात् तत्सम्बन्धो नित्य इत्यविरुद्धम् ॥ २८ ॥

नन्वेवमप्यतः प्रभवादिति देवादेर्वेदप्रभवत्वोक्त्या तदुपपादकवेदस्यापि प्रभवप्रसङ्गादनित्यत्वमाशङ्क्याह—

**अत एव च नित्यत्वम् ॥ २९ ॥**

अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वादेव वेदस्य नित्यत्वं प्रत्येतव्यम् । कर्त्रस्मरणात् सिद्धमेव वेदनित्यत्वमनेन दृढीकृतमिति बोध्यम् ॥ २९ ॥

ननु महाप्रलये आकृतेरप्यानित्यत्वाच्छब्दार्थसम्बन्धस्यानित्यत्वं विरोधस्तदवस्थ एवेत्याशङ्क्याह—

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥**

सुषुप्तिप्र(लय?)बोधयोरिव सृष्टिप्रलययोरावृत्तावपि प्रलये प्रपञ्चस्य संस्कारात्मना अविद्यायां विद्यमानत्वेन पूर्वकल्पप्रपञ्चसमाननामरूपत्वादुत्तरकल्पप्रपञ्चस्याकृतेर्नित्यत्वम् । तथा न शब्दार्थसम्बन्धस्यानित्यत्वविरोधः । कथम् । समाननामरूपत्वदर्शनात्, स्मृतेश्च, 'धाता यथापूर्वमकल्पयद्' (ऋ. सं १०-१९०-३) इति श्रुतौ दर्शनाद् 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इति स्मृतेश्च ॥ ३० ॥

इत्थमभिहितं देवानामधिकारमाक्षिपति—

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

ब्रह्मविद्यायां देवादीनामनधिकारं जैमिनिराचार्यो मन्यते, कस्मात्, मध्वादिष्वसम्भवाद् 'असौ वा आदित्यो देवमधु' (छा. ३. १. १) 'आदित्यो ब्रह्मेत्यादेशः' (छा. ३. ११. १) इत्यादिषु मधुब्रह्माध्यासेनादित्यदेवतोपासनेषु मनुष्याधिकारकेषु तेषामेवादित्यादीनामधिकारासम्भवात् । न ह्येकस्योपास्योपासकभावः सम्भवति तस्य भेदनिष्ठत्वात् । तथा चात्र प्रयोगः—'ब्रह्मविद्या न देवादीनधिकरोति विद्यात्वान्मधुविद्यावद्' इति ॥ ३१ ॥

ननु क्वचिदनधिकारात्र सर्वत्रानाधिकारोऽस्ति ब्राह्मणस्य राजसूयानाधिकारेऽपि बृहस्पतिसवेऽधिकारादित्याशङ्क्याह

## ज्योतिषि भावाच्च ॥ ३२ ॥

अलौकिकयोरादित्यशब्दप्रत्यययोर्ज्योतिर्मण्डले भावात् तेषामस्मदादिवदिष्टानिष्टप्राप्तिपरिहाररूपचेष्टाया अदर्शनेनाचेतनत्वावधारणात् तदतिरिक्तस्य चेतनस्य विग्रहादिमतः प्रत्यक्षाद्यगोचरत्वात् तद्विग्रहादिप्रतिपादकाना मन्त्राणामन्यपरत्वेन स्वार्थे प्रामाण्याभावान्न देवानां विद्याधिकार इति सूत्रस्य तात्पर्यार्थः ॥ ३२ ॥

इत्थं पूर्वपक्षे सिद्धान्तयति–

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दो जैमिनिमतनिरासार्थः । बादरायणस्त्वाचार्यो देवादीनां विग्रहवत्त्वेन ब्रह्मविद्यायामधिकारभावं मन्यते । कस्मात्, अस्ति ह्यर्थित्वाद्यधिकारकारणम् । न हि क्वचिदधिकारो नेति सर्वत्र वक्तुं पार्यते निर्गुणविद्यायां सम्भवाद् बृहस्पतिसवे ब्राह्मणस्येव । न च विग्रहवत्त्वं नेति वाच्यम् । तदप्यस्ति हि । तत्तत्प्रतिपादकमन्त्राणां मानान्तरविरोधाभावेन प्रमाणत्वादिति दिक् ॥ ३३ ॥

अपशूद्राधिकरणम् ।

पूर्वं यथा 'तद्यो यो देवाना'मिति देवशब्दश्रुत्या मनुष्याधिकारनियमापवादेन देवानामधिकार उक्तस्तथेह शूद्रशब्दश्रुत्या द्विजाद्यधिकारनियममपोद्य शूद्रस्याप्यधिकारोऽस्तीति दृष्टान्तसङ्गत्येदमाह—

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

अत्र पूर्वपक्षे जातिशूद्रस्यापि ब्रह्मविद्यायां त्रैवर्णिकादविशेषः फलं सिद्धान्ते ततो विशेष इति विवेकः । छान्दोग्ये (४. २. ३) संवर्गविद्यायां श्रूयते—'अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' इति । तत्र श्रूयमाणस्य शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात् तस्य हंसस्यानादरश्रवणाद् या शुगुत्पन्ना सा शूद्रशब्देन सूच्यते । हि रैक्केण स्वसर्वज्ञत्वज्ञापनार्थम् । योगेनापि शूद्रशब्दस्य क्षत्रियपरत्वमाह तदाद्रवणात् । तं रैक्वं प्रति जानश्रुतिर्विद्याराहित्यजनितया शुचा दुद्रावेति शूद्रो जानश्रुतिरुच्यते । अतो न शूद्रस्याधिकार इत्यर्थः ॥ ३४ ॥

ननु मुख्य एव शूद्रो जानश्रुतिरस्तु किं जघन्येन योगेनेत्यत आह—

**क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥**

जानश्रुतिर्न मुख्यशूद्रः, कुतः, क्षत्रियत्वगतेः । तत् कस्माद्, उत्तरत्र संवर्गविद्यावाक्यशेषे चैत्ररथेन प्रसिद्धक्षत्रियेणाभिप्रतारिणा समभिव्याहारात्मकलिङ्गादित्यर्थः । समानजातीयानामेव हि प्रायेण सहचारो भवतीति भावः । अतो न जातिशूद्रस्याधिकार इति सिद्धम् ॥ ३५ ॥

ननु कस्मान्नाधिकार इत्यत आह—

**संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥**

'तं होपनिन्ये' (श. ब्रा. ११. ५. ३. १३) 'अधीहि भगव इति होपससाद' (छा. ७. १. १) इत्यादिविद्याप्रदेशेषूपनयनादिसंस्कारपरामर्शात् । तर्हि शूद्रस्याप्युपनयनं कल्प्यतामित्यत आह तदभावाभिलापाच्च 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' (मनु. १०. १२६) इत्यादिनोपनयनादिसंस्काराभावाभिधानादित्यर्थः ॥ ३६ ॥

किञ्च—

**तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥**

तस्य जाबालस्य सत्यवचनेन शूद्रत्वाभावनिर्धारणे सत्येव गौतमस्य विद्योपदेशे प्रवृत्तिदर्शनात् । अतो न शूद्रस्याधिकार इत्यर्थः ॥ ३७ ॥

अपि च—

**श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥**

स्मृतेः 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' 'तस्माच्छूद्रसमीपे नाध्येतव्यम्' 'न शूद्राय मतिं दद्याद्' 'द्विजातीनामध्ययनमिज्या दानम्' इत्यादिस्मृतितो वेदश्रवणस्य तदध्ययनस्य तदर्थयोस्तत्प्रयोजनयोरर्थज्ञानानुष्ठानयोश्च प्रतिषेधात् । अतः कथञ्चिदपि न शूद्रस्य ब्रह्मविद्यायां विधिपूर्वकाधिकार इति सिद्धम् ॥ ३८ ॥

* १० कम्पनाधिकरणम् *

समाप्तः प्रासङ्गिकोऽधिकारविचारः । अधुना प्रकृतवाक्यार्थविचारं प्रवर्तयिष्यामः । प्रासङ्गिकत्वान्न व्यवहितेनास्य सङ्गत्यपेक्षा । पूर्वं 'शब्दादेव प्रमितः' (ब्र. १. ३. २४) इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मज्ञानायेत्युक्तम् । न तथेह 'यदिद'मिति वाक्ये प्राणानुवादो युक्तः, तस्य स्वरूपतः कल्पितस्य ब्रह्मैक्यायोगादिति प्रत्युदाहरणसङ्गत्येदमाह

## कम्पनात् ॥ ३९ ॥

अत्र पूर्वपक्षे प्राणोपास्तिः सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः । कठवल्लीषु (२. ६. २) श्रूयते—'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्' इत्यादि । तत्र एजृ कम्पन इति धातोः कम्पनार्थत्वात् सर्वजगत्कम्पनहेतुः प्राणः प्रतीयते । स किं वायुविकार उत परमात्मेति सन्देहे वायुविकार इति पूर्वः पक्षः । सिद्धान्तस्तु 'प्राणस्य प्राणम्' (बृ. ४. ४. १८) इति प्राणशब्दस्य परमात्मनि प्रसिद्धेरिह प्राणशब्दवाच्यः परमात्मैव, कुतः, कम्पनात् सर्वस्य सवायुकस्य जगतो जीवनादिचेष्टाहेतुत्वाद् । हेतुत्वं च 'न प्राणेन नापानेन' (का. २. ५. ५) इत्यादिश्रुतिप्रसिद्धम् ॥ ३९ ॥

* ११ ज्योतिर्दर्शनाधिकरणम् *

पूर्वं सर्वशब्दश्रुतिसङ्कोचानुपपत्त्या प्रकरणात् प्राणशब्दं ब्रह्मेत्युक्तम् । न तथेह सम्प्रसादवाक्ये प्रकरणानुग्राहकं किञ्चिदस्ति, येन प्रकरणाज्ज्योतिश्शब्दं ब्रह्म स्यादिति प्रत्युदाहरणसङ्गत्येदमाह—

## ज्योतिर्दर्शनात् ॥ ४० ॥

अत्र पूर्वपक्ष आदित्योपास्त्या क्रममुक्तिः सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलभेदः । छान्दोग्ये (८. १२. ३) प्रजापतिविद्यायां श्रूयते—'य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' इत्यादि । तत्र किं ज्योतिश्शब्दितमादित्यादितेज उत ब्रह्मेति विशये आदित्यादितेज इति पूर्वः पक्षः । सिद्धान्तस्तु

ज्योतिरत्र ब्रह्मैव कुतः, दर्शनात्, 'य आत्मापहतपाप्मा' (छा. ८. ७. १) इत्युपक्रमालोचनया ब्रह्मण एव प्रतिपाद्यतयानुवृत्तिदर्शनादित्यर्थः ॥ ४० ॥

(१२ अर्थान्तरत्वादिव्यपदेशाधिकरणम्)

पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धोऽपि ज्योतिश्शब्दः स्वार्थात् प्रच्यावितः। तथाकाशोपक्रमवशाद् ब्रह्मादिशब्दोऽपि स्वार्थात् प्रच्याव्यतामिति दृष्टान्तसङ्गत्येदमाह—

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

अत्र पूर्वपक्षे भूताकाशात्मकब्रह्मोपास्त्या क्रममुक्तिः सिद्धान्ते ब्रह्मधिया मुक्तिरिति फलभेदः । छान्दोग्ये (८ १४.१) श्रूयते—'आकाशो हवै नाम नामरूपयोर्निर्वहिते'त्यादि । तत्र किमाकाशशब्दितो भूताकाश उत परमात्मेति विशये भूताकाश इति पूर्वः पक्षः । सिद्धान्तस्तु परमात्मैवाकाशशब्दितः । कस्माद्, अर्थान्तरत्वादिव्यपदेशात् 'ते यदन्तरे'त्याकाशस्य नामरूपाभ्यामर्थान्तरत्वेन व्यपदेशात् आदिशब्देन 'तद्ब्रह्म तदमृतं स आत्मा' इति ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः ॥ ४१ ॥

(१३ सुषुप्त्युत्क्रान्त्यधिकरणम्)

पूर्वं नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तम् । तन्न । 'प्राज्ञेनात्मना सम्परिष्वक्तः' इत्यत्राभिन्नेऽपि जीवे भेदोपचारादित्याक्षिप्य समाधानादाक्षेपिकसङ्गत्येदमाह—

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

अत्र पूर्वपक्षे जीवानुवादेन कर्मशेषकर्तृस्तुतिः सिद्धान्ते तदनुवादेन तत्तादात्म्यधीरिति फलभेदः । बृहदारण्यके (४. ४. २२) श्रूयते—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इत्यादि । तत् किं जीवानुवादकम् उत तदनुवादेनासंसारिस्वरूपप्रतिपादकमिति सन्देहे जीवानुवादकमिति पूर्वः पक्षः । सिद्धान्तस्तु विज्ञानमयसुषुप्त्याद्यवस्थावज्जीवानुवादेन ब्रह्माभेदप्रतिपादकमिदं वाक्यम् । कस्मात्, 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ. ४. ३. २१) 'प्राज्ञेनात्मनान्वारूढः उत्सर्जन् याति' (बृ. ४. ३. ३५) इति सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद् भेदेन परमात्मनः प्राज्ञशब्देन व्यपदेशादित्यर्थः ॥

इतश्च ब्रह्माभेदप्रतिपादकमिदं वाक्यमित्याह—

## पत्यादिशब्देभ्यः ॥ ४३ ॥

'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' (बृ. ४. ४. २२) इति पत्यादिशब्दा असंसारित्वप्रतिपादकाः । 'स न साधुना कर्मणा भूयान्' इत्याद्याः संसारित्वनिषेधका एतद्वाक्यगताः । तेभ्योऽसंसारिब्रह्मात्मप्रतिपादकमिदं वाक्यमिति समञ्जसम् ॥ ४३ ॥

अस्मिन् पादे त्रयोदशाधिकरणानि । सूत्राणि त्रिचत्वारिंशत् ॥

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

प्रथमाध्यायस्य तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

( १ आनुमानिकाधिकरणम् )

पूर्वमीक्षत्यधिकरणे गतिसामान्यसम्पादनं च प्रतिज्ञाय तत्र वेदान्तानां ब्रह्मणि गतिसामान्यं पादत्रयेण प्रत्यपादि । अधुना प्रधानस्याशब्दत्वमाक्षिप्य समाधीयत इत्याक्षेपसङ्गत्या चतुर्थपादोऽयमारभ्यते । पूर्वं 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र. १. ३. ४२) इत्यत्र प्रसिद्धजीवोक्तिमतेनाप्रसिद्धब्रह्मोक्तिवदप्रसिद्धप्रधानोक्तिपरमेव काठकवाक्यमस्त्विति दृष्टान्तसङ्गत्येदमधिकरणमारभते –

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तानां समन्वय इति नियमाभावः फलं सिद्धान्ते तादृशनियम इति विवेकः । कठवल्लीषु (१-३-११) श्रूयते -'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' इति । तत्र किमव्यक्तशब्देन प्रधानमुच्यते उत पूर्वप्रकृतं शरीरमिति संशये सांख्यस्मृतौ महदव्यक्तपुरुषशब्दानां तत्तत्प्रत्ययेऽप्रसिद्धत्वादानुमानिकमनुमानगम्यं प्रधानमप्येकेषां शाखिनां प्रत्यक्षमव्यक्तशब्देन पठ्यत इत्यशब्दत्वमसिद्धमिति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु न प्रधानम् । कुतः, शरीररूपकविन्यस्तगृहीतेः 'शरीरं रथमेव तु' ( का. १-३-३) इत्यस्मिन् पूर्ववाक्ये शरीरस्य रथरूपकेण विन्यस्तस्य कल्पितस्याव्यक्तशब्देन गृहीतेर्ग्रहणात् । कथं तच्छब्दग्राह्यं शरीरमित्यत आह दर्शयति च । पूर्वापरवाक्यसन्दर्भः पर्यालोच्यमान औचित्येन प्रकृतं शरीरमेवाव्यक्तग्राह्यं दर्शयतीत्यर्थः ॥ १ ॥

**ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दार्हत्वमित्यत आह–**

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

दर्शयतीत्यनुषङ्गः । तुशब्द. शङ्कानिरासार्थः । स्थूलशरीरारम्भकं भूतसूक्ष्म कारणमव्यक्तशब्देन दर्शयति । कुत', तदर्हत्वाद् अव्यक्तशब्दार्हत्वादित्यर्थः । [1]'गोभिः श्रीणीत मत्सरम्' (ऋ. सं. ७-४६-४) इत्यादिवत् प्रकृतिवाचकशब्देन विकारो लक्ष्यत इति भावः ॥ २ ॥

**ननु** भूतसूक्ष्माव्यक्ताङ्गीकारे तस्यैव प्रधानत्वेन साङ्ख्यैरङ्गीकारात् तद्वादः प्राप्त इत्यत आह—

## तदधीनत्वादर्थवत् ॥ ३ ॥

न स्वतन्त्रप्रधानवादोऽस्माभिरङ्गीकृतः । कस्मात् , तदधीनत्वाद् ईश्वराधीनत्वादव्यक्तस्य । तर्हीश्वरादेवास्तु जगदुत्पत्तिः किं तेनात आह अर्थवत् । 'मायिनं तु महेश्वरम्' (श्वे. ४-१०) इति श्रुतावव्यक्तस्येश्वरसहकारित्वावगमात् प्रयोजनवदव्यक्तमित्यर्थः ॥ ३ ॥

**अव्यक्तं** न प्रधानमित्यत्र हेत्वन्तरमाह–

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

प्रधानपुरुषविवेकात् कैवल्यं वदद्भिः साङ्ख्यैर्ज्ञेयत्वेन प्रधानमभिधीयते । न चात्राव्यक्तशब्दमन्तरेण ज्ञातव्यमव्यक्तमिति वचस्समास्ति । अतो ज्ञेयत्वस्यावचनादनभिधानान्नाव्यक्तं प्रधानमित्यर्थः ॥ ४ ॥

**ननु** ज्ञेयत्वावचनमसङ्गतमित्याशङ्क्याह—

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

'महतः परं ध्रुवं निचाय्य' (का. २-३-१५) इत्युत्तरवाक्यमव्यक्तशब्दितं प्रधानं ज्ञेयत्वेन वदतीति चेन्न । प्राज्ञो हि परमात्मा हि निचाय्यत्वेन निर्दिष्टो न प्रधानम् । कस्मात्, 'पुरुषान्नापरं किञ्चिद्' (का. २-३-११) इत्यात्मप्रकरणादित्यर्थः ॥ ५ ॥

**इतश्च** न प्रधानमत्र ग्राह्यमित्याह—

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

---

१. गोभिर्गोविकारैः पयोभिः.

त्रयाणामेवाग्निजीवपरमात्मनामेव एवमुत्तरवाक्यपर्यालोचनया वक्तव्यत्वेनोपन्यासः। तद्विषय एव प्रश्नोऽपि दृश्यते। कठवल्या (१-१-१३) 'स त्वमग्निम्' इत्याद्यग्निप्रश्नः। 'येयं प्रेते विचिकित्सा' (१-१-२०) इति जीवप्रश्नः। 'अन्यत्र धर्माद्' (१-२-१४) इत्यादि परमात्मप्रश्नः। अतो नाव्यक्तं प्रधानमित्यर्थः॥ ६॥

श्रौतोऽव्यक्तशब्दो न साङ्ख्यसाधारणतत्त्वगोचरः वैदिकशब्दत्वान्महच्छब्दवदित्याह—

**महद्वच्च॥ ७॥**

'बुद्धेरात्मा महान् परः' (का. १-३-१०) इति श्रुतो महच्छब्दो यथा न साङ्ख्याभिमताद्वितीयसत्तामात्रतत्त्ववाची आत्मशब्दप्रयोगात्, तद्वन्न वैदिकाव्यक्तशब्दोऽपि प्रधानवाची। अतः शरीरमेवाव्यक्तशब्दितमिति सिद्धम्॥ ७॥

* २ चमसाधिकरणम् *

पूर्वमव्यक्तशब्दमात्रेण प्रधानस्याप्रत्यभिज्ञायामप्यत्र त्रिगुणत्वादिलिङ्गोपेतादजाशब्दात् प्रत्यभिज्ञास्त्विति प्रत्युदाहरणसङ्गत्येदमाह —

**चमसवदविशेषात्॥ ८॥**

अत्र पूर्वपक्षे ब्रह्मणि समन्वयासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः। श्वेताश्वतरोपनिषदि (४. ५) श्रूयते —'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादि। तत्र किमजाशब्देन प्रधानमुच्यते उत तेजोऽबन्नात्मिकावान्तरप्रकृतिरिति संशये न जायत इत्यजा साङ्ख्यसिद्धा प्रकृतिरिति पूर्वः पक्षः। सिद्धान्तस्तु न प्रधानस्यासाधारण्येनात्र प्रत्यभिज्ञापकं किञ्चित् समस्ति, लोहितादिशब्दानां वर्णविशेष एव रूढत्वान्न रज आदौ, न जायत इत्यजेत्यन्यत्रापि साधारण्यात्। अत्र निर्धारणाभावे दृष्टान्तश्चमसवद्। 'यथार्वाग्बिलश्चमस' (बृ. २-२-३) इत्यादावयं चमस इत्यवधारणं न सम्भवति कथञ्चिदर्वाग्बिलत्वादेरन्यत्राप्यविशेषाद् एवमजामन्त्रेऽप्यजात्वादेरविशेषान्न प्रधाननिर्णय इत्यशब्दं प्रधानमित्यर्थः॥ ८॥

ननु केयमजा प्रतिपत्तव्येत्यत्राह —

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके॥ ९॥**

ज्योतिस्तेज उपक्रमे यस्यास्तेजोऽबन्नलक्षणायाः सा ज्योतिरुक्रमा । तुशब्दोऽवधारणे । सैवेह निर्धारणीया न प्रधानम् । कस्मात्, तथा ह्यधीयत एके हि यस्मादेके छन्दोगास्तेजोऽबन्नात्मिकायाः प्रकृतेः 'यदग्ने रोहितं रूपम्'(छा. ६-४-१) इत्यादिना रोहितादिरूपतामधीयते समामनन्ति । तथेह लोहितादिशब्दसाम्यात् तान्येव तेजोऽबन्नानि प्रत्यभिज्ञायन्त इति समञ्जसम् ॥ ९ ॥

नन्वजाशब्दस्यच्छागे रूढत्वात् कथं तेजोऽबन्नात्मकप्रकृतिपरत्वमित्यत आह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

चशब्द. शङ्कानिरासार्थः । तेजोऽबन्नात्मकप्रकृतौ नाजात्वानुपपत्तिः । कुत', कल्पनोपदेशाद्, यथा लोके प्रसिद्धामजां भुक्तभोगामेकोऽजस्त्यजति अन्यस्तामनुवर्तते एव त्यागभोगयो' कार्यकरणसङ्घाताद्युपादानतेजोऽबन्नात्मकप्रकृतेस्साम्यद्योतनार्थं कल्पनयाजात्वस्योपदेशाद् । यथा मधुभिन्नादित्यस्य 'असौ वा आदित्यो देवमधु' (छा. ३.१.१) इति मधुत्वोपदेशस्तद्वदजाभिन्नायाः प्रकृतेरजात्वोपदेशे न कश्चिद्विरोधः । तस्मान्नात्र प्रधानस्यावकाश इत्यशब्दं प्रधानमिति सिद्धम् ॥ १० ॥

: ३ सङ्ख्योपसङ्ग्रहाधिकरणम् :

पूर्वमाध्यात्मिकाधिकारे प्रसिद्धच्छागग्रहणायोगादजा तेजआदिकेत्युक्तम् । तथा 'यस्मिन् पञ्च पञ्चजना' (बृ. ४-४-१७) इति मन्त्रे पञ्चजनशब्देन प्रसिद्धमनुष्यग्रहणायोगात साङ्ख्याभिमतपञ्चविंशतितत्त्वग्रहणमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

अत्र फल पूर्ववद् द्रष्टव्यम् । बृहदारण्यके (४-४-१७) श्रूयते—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित.' इत्यादि । तत्र किं पञ्चजनशब्देन मूलप्रकृत्यादीनि पञ्चविंशतितत्त्वान्युच्यन्त उत वाक्यशेषगताः प्राणादय इति संशये तत्त्वानीति पूर्व' पक्षः । सिद्धान्तस्तु अस्मिन् मन्त्रे श्रूयमाणया पञ्चविंशतिसङ्ख्यया स्मृतिसिद्धपञ्चविंशतितत्त्वानामुपसङ्ग्रहादपि न प्रधानस्य शब्दवत्त्वं, कुतः, नानाभावात्, तेषां पञ्चानां पञ्चकानामेकपञ्चकपर्यासान्यपञ्चकव्यावृत्तधर्मवत्त्वाभावेन नानात्वात् । नानात्वेऽपि कथञ्चित् पञ्चविंशतिसङ्ख्याङ्गीकारे बाधकान्तरमाह अतिरे·

कात् । अस्मिन्मन्त्रे श्रूयमाणयोरात्माकाशयोः पञ्चविंशतितत्त्वातिरिक्तत्वात् सप्तविंशतितत्त्वप्राप्तावपसिद्धान्तापातः । तस्मान्नात्र प्रधानादितत्त्वग्रहणमुचितम् ॥ ११ ॥

**ननु** ते पञ्चत्वसङ्ख्याकाः पञ्चजनाः क्व इत्यपेक्षायामाह—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

प्राण एव आदिर्येषां प्राणचक्षुःश्रोत्रान्नमनसां ते प्राणादयः पञ्चजनशब्देनोच्यन्ते । कस्माद्, वाक्यशेषात् 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः (बृ. ४-४-१८) इत्यादिवाक्यशेषस्थत्वादित्यर्थः ॥ १२ ॥

**नन्वस्तु** माध्यन्दिनानां प्राणादिष्वन्नस्याम्नानात् पञ्चसङ्ख्या काण्वानां तदनाम्नानात् कथं पञ्चसङ्ख्येत्यत आह—

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

ऐकेषां काण्वानामसत्यन्ने 'तद्देवा ज्योतिषां ज्योतिः' (बृ. ४-४-१६) इत्यादिपूर्ववाक्यस्थज्योतिषा पञ्चत्वं पूरणीयम् । अत. प्रधानमशब्दमिति सिद्धम् ॥

: ४ कारणत्वाधिकरणम् :

**इत्थमधिकरणत्रये** प्रधानस्याशब्दत्वसाधनेन ब्रह्मणि वेदान्तानां समन्वयः साधितः । अधुना तेषामेव परस्परविरुद्धार्थप्रतिपादकत्वेनानिश्चायकत्वादनुमानसिद्धप्रधानपर एवोक्तसमन्वयोऽस्त्वित्याक्षेपसङ्गत्या, पूर्वं पञ्चत्वसङ्ख्यापूरणमन्नेन ज्योतिषा वेति विकल्पस्याविरोधेऽपि प्रकृते कारणे वस्तुनि विकल्पायोगाद्विरोधे सत्यप्रामाण्यं वाक्यानामिति प्रत्युदाहरणलक्षणावान्तरसङ्गत्या चेदमाह—

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

अत्र पूर्वोत्तरयोस्समन्वयासिद्धिस्तत्सिद्धिरिति फलभेदः । अत्र जगत्कारणवादिवाक्यानि ब्रह्मणि मान न वेति विशये तेषां परस्परविरोधदर्शनान्न मानमिति पूर्वः पक्षः । सिद्धान्तस्तु चशब्दः शङ्कानिरासार्थः । ब्रह्मणः कारणत्वे विरोधो नास्ति । कुतः, आकाशादिषु यथा व्यपदिष्टोक्तेः यथाभूत ईश्वरः कारणत्वेन व्यपदिष्ट एकस्मिन् वेदान्तवाक्ये तथाभूतस्यैवापरस्मिन् वाक्येऽप्युक्तेरभिधानादित्यर्थः ॥ १४ ॥

**ननु** क्वचिदसतः क्वचित् सत उत्पत्तिश्रवणाद्विरोध इत्याशङ्क्याह-

## समाकर्षात् ॥ १५ ॥

'असदेवेदमग्र आसीद्' (छा. ३-१९-१) इत्यनभिव्यक्तनामरूपवाचिना-सच्छब्देन सत एव समाकर्षान्नासतः कारणत्वशङ्कावकाशः। अतो जगत्कारणवादि-वाक्यसमन्वयो ब्रह्मण्येवेति सिद्धम् ॥ १५॥

: ५ जगद्वाचित्वाधिकरणम् *

पूर्वमेकवाक्यस्थसच्छब्दबलादसच्छब्दो नीतः इह तु वाक्यभेदाद 'ब्रह्म ते ब्रवाणि' (कौ ब्रा. ४-१) इति बालाकिवाक्यस्थब्रह्मशब्देन प्राणादिशब्दो ब्रह्मपरत्वेन नेतुमशक्य इति प्रत्युदाहरणसङ्गत्येदमाह—

## जगद्वाचित्वात् ॥ १६ ॥

अत्र पूर्वपक्षे वाक्यस्य प्राणाद्युपासनापरत्वाद् ब्रह्मणि समन्वयासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः । कौषीतकिब्राह्मणे (४. १९) श्रूयते—'यो हवै बालाके! एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्य.' इति । तत्र वेदितव्यः कर्त्ता किं प्राण उत जीव आहोस्वित् परमात्मेति विशये 'यस्य वैतत् कर्मे'ति चलनात्मककर्मणः प्राणस्यैव सम्भवात् 'एवमेवैष प्रज्ञात्मा एतैरात्मभिरुपभुङ्क्ते' (कौ. ब्रा. ४-२०) इति जीवलिङ्गाच्च प्राणजीवाविति पूर्वः पक्षः। सिद्धान्तस्तु पुरुषाणां कर्त्ता परमात्मैव, कुतः, 'ब्रह्म ते ब्रवाणी'ति ब्रह्मण एवोपक्रमात् क्रियत इति व्युत्पत्त्या कर्मशब्दस्य प्रत्यक्षाद्युपस्थापितजगद्वाचित्वात् । ननु पुरुषाणां जगदन्तर्भावात् तत्कर्तृत्व किमिति पृथगुच्यत इति चेन्न । गार्ग्येण ब्रह्मत्वेनोक्तपुरुषाणामब्रह्मत्वद्योतनाय गोबलीवर्दन्यायेन पृथगुच्यत इति ध्येयम् ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १७ ॥

जीवमुख्यप्राणलिङ्गाच्च न ब्रह्मपरत्वावधारणमिति चेत् तद् व्याख्यातम् प्रतर्दनाधिकरणे 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगाद्' (ब्र. सू. १. १. ३१) इति । प्रतर्दनविचारे कर्मपदस्याविचारादगतार्थता द्रष्टव्या ॥ १७॥

किञ्च—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

जैमिनिराचार्योऽस्मिन् प्रकरणे जीवपरामर्शमन्यार्थं ब्रह्मप्रतिपत्त्यर्थं यतो मन्यते, अतो ब्रह्मपरमेवेदं वाक्यम् । कुतो मन्यते, प्रश्नव्याख्यानाभ्यां 'क्वैष ए-

तद् बालाके! पुरुषोऽशयिष्ट क्व वा एतदभूद्' (कौ. ब्रा. ४. १९) इत्यादिप्रश्नः। 'यदा सुप्तः स्वप्नं न कश्चन पश्यति अथास्मिन् प्राण एकधा भवति' (कौ. ब्रा. ४. २०) इति उत्तर व्याख्यानम्। ताभ्यां यस्मिञ् जीवस्य स्वापागमने भवत, स एवात्र परमात्मा वेदितव्यतयोपदिष्ट । अपि चैके वाजसनेयिनः बालाक्यजातशत्रु-संवादे 'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्' (बृ. २-१-१६) 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ. २. १. १७) इति प्रश्नो-त्तराभ्यां स्पष्ट विज्ञानमयातिरिक्त परमात्मानमामनन्ति । एतत् कौषीतकिवाक्यं जगत्कर्तरि ब्रह्मणि समन्वितमिति सिद्धम् ॥ १८ ॥

( ६ वाक्यान्वयाधिकरणम् )

**पूर्वं** ब्रह्मोपक्रमसामर्थ्याद् ब्रह्मपरत्वमुक्तम्। तर्हि तद्वदेव मैत्रेयीब्राह्मणस्य 'न वा अरे पत्युः कामाय' इत्यादिजीवोपक्रमसामर्थ्याज्जीवपरत्वमस्त्विति दृष्टान्त-सङ्गत्येदमाह—

## वाक्यान्वयात् ॥ १९ ॥

फलं पूर्ववत् । बृहदारण्यके (२-४-५) श्रूयते—'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इत्यादि। तत्र किं जीवो द्रष्टव्यत्वादिरूपेणोपदिश्यते किं वा परमात्मेति संशये जीव इति पूर्व. पक्षः । सिद्धान्तस्तु परमात्मैनात्र द्रष्टव्यतयोपदिष्ट आत्मा, कुतः, वाक्यान्वयाद्, उपक्रमादिपर्यालोचनया वाक्यस्य ब्रह्मण्येवान्वया-दित्यर्थः ॥ १९ ॥

**ननु** पतिजायादिभोग्यजातेन लिङ्गेन जीवोपक्रमः प्रतीयते। स कथमित्या-शङ्क्याह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

जीवब्रह्मणोर्हि कार्यकारणयोर्भेदाभेदौ वर्तेते अत्यन्तभेद एकविज्ञानप्रति-ज्ञाविरोधप्रसङ्गात्। तथा च तत्प्रतिज्ञासिद्धेरिममभेदांशमादाय जीवोपक्रमणं लि-ङ्गमित्याश्मरथ्य आचार्यो मन्यते ॥ २० ॥

**समाधानान्तरमाह**—

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

संसारदशायामत्यन्तं ब्रह्मणो भिन्नस्य जीवस्य ब्रह्मात्मत्वसाक्षात्काराद् का-

र्येकरणसङ्घातादुत्क्रमिष्यत एवम्भावात् परमात्मनैकीभावाद् भविष्यदभेदमादाय जीवोपक्रम इत्यौडुलोमिराचार्यो मन्यते ॥ २१ ॥

नन्विदमप्यसङ्गतं सत्यकार्यकारणसङ्घातवतः संसारिणोऽत्यन्तं ब्रह्मभिन्नस्य मुक्तिदशायामभेदायोगादित्यरुच्या परमं समाधानमाह—

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

ब्रह्मण एवाविद्याकल्पितभेदेन जीवरूपेणावस्थितेर्जीवोपक्रमोऽविरुद्ध इति काशकृत्स्न आचार्यः श्रुतितात्पर्यज्ञो मन्यते । ततो द्रष्टव्ये परब्रह्मणि मैत्रेयीब्राह्मणवाक्यं समन्वितमिति सिद्धम् ॥ २२ ॥

* ७ प्रकृत्यधिकरणम् *

पूर्वं 'जन्माद्यस्य यतः' (ब्र. १. १. २) इति सूत्रे ब्रह्मणो जगत्कारणत्वमभिहितम् । तदधुनात्र विचार्यते । एवञ्च सामान्यज्ञानस्य विशेषविचारहेतुत्वात् तेन हेतुहेतुमद्भावसङ्गत्येदमाह—

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

अत्र पूर्वपक्ष एकविज्ञानात् सर्वविज्ञानप्रतिज्ञाया गौणत्वं सिद्धान्ते तन्मुख्यत्वमिति फलभेदः । तत्र किं ब्रह्मणो जगन्निमित्तत्वमात्रम् उतोपादानत्वमपीति संशये 'तदैक्षते'तीक्षणपूर्वकर्तृत्वश्रवणान्निमित्तत्वमात्रमिति पूर्वः पक्षः । सिद्धान्तस्तु प्रकृतिश्च ब्रह्म, चकारान्निमित्तमपि, कुतः, प्रतिज्ञादृष्टान्तानुपरोधाद् 'येनाश्रुतं श्रुतं भवति' (छा. ६. १. ३) इत्यादिरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, यथा 'सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम्' इत्यादिदृष्टान्तश्च, तयोः सामञ्जस्यादित्यर्थः ॥ २३ ॥

किञ्च—

## अभिध्योपदेशाच्च ॥ २४ ॥

'सोऽकामयत' इत्यात्मनो ध्यानोपदेशात् कर्तृत्वम् । 'बहु स्याम्' इति ध्यानोपदेशात् प्रकृतित्वमिति ॥ २४ ॥

प्रकृतित्वे हेत्वन्तरमाह—

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तंयन्ति' (छा. १. ९. १) इत्याकाशशब्देन साक्षाद् ब्रह्म गृहीत्वा जगदुत्पत्तिप्रलययोराम्नानाद् ब्रह्म निमित्तप्रकृती इत्यर्थः ॥ २९ ॥

नन्वेकस्य कृतिमत्त्वं कृतिविषयत्वं च विरुद्धमित्याशङ्क्याह—

## आत्मकृतेः परिणामात् ॥ २६ ॥

'तदात्मानं स्वयमकुरुत' (तै. २. ७ १) इति द्वितीयया कृतिविषयया कृतिविषयत्व, स्वयमकुरुतेत्यनेन कृतिमत्त्वं चाम्नायते । तथा च ब्रह्मण उपादानत्वं निमित्तत्वं चाविरुद्धं, कुतः, आत्मकृतेः आत्मसम्बन्धिनी कृतिरात्मकृतिस्ततो हेतोः । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वम् अत आह परिणामात् परिणामो विवर्त्तः । सिद्धस्यापि विवर्त्तात्मना साध्यत्वात् कर्मत्वोपपत्तिरित्यर्थः ॥ २६ ॥

किञ्च—

## योनिश्च हि गीयते ॥ २७ ॥

'यद् भूतयोनि परिपश्यन्ति' (मुण्ड. १. १. ६) इति प्रकृतिवाचकयोनिशब्देनात्मा हि यस्माद् गीयते तस्मात् प्रकृतिर्ब्रह्मेति । ततो ब्रह्मणः प्रकृतित्व कर्तृत्वं च सिद्धम् ॥ २७ ॥

* ८ सर्वव्याख्यानाधिकरणम् ।

इत्थमभिहितेन न्यायेन 'ईक्षतेर्नाशब्दम्' (ब्र. सू. १-१-५) इत्यादिनाशब्दत्वादिहेतुभिः प्रधानकारणवादो निराकृतः । न तथेह्याणुस्वभावासत्कारणवादाः, तेषामपि कारणत्वबोधकशब्दानां श्रुतत्वादिति प्रत्युदाहरणसङ्गत्येदमाह--

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तसमन्वयासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र वेदान्ता विषयाः । तत्र किं ब्रह्मण इव परमाणुशून्यादीनामपि क्वचिज्जगत्कारणत्वं श्रुतमस्ति अथवा सर्वत्र ब्रह्मण एव सर्वकारणत्व प्रतिनियतमिति संशये 'अण्व्य इवेमा धानाः' (छा. ६. १२. १) 'असदेवेदमग्र आसीत्' (छा. ३. १९. १) 'स्वभावमेके' (श्वे. ६. १) इत्यादिष्वणवादीनामपि कारणत्वं श्रुतमिति पूर्वः पक्षः । सिद्धान्तस्त्वेतेन प्रधाननिराकरणे ये हेतवोऽसच्छब्द-

त्वाचेतनत्वैकविज्ञानप्रतिज्ञानुपपत्त्यादयस्तेषामण्वादिपक्षेऽपि साम्येन सर्वाण्वादिकारणवादा निराकृतत्वेन व्याख्याताः । नचासदित्यादिशब्दविरोधः तत्रासच्छब्दस्यानभिव्यक्तनामरूपपरत्वेनाविरोधात् । सूक्ष्मत्वाच्चात्मन्यणुशब्दो गौणः । स्वभाववादस्तु पूर्वपक्षत्वेनोपन्यस्तः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तस्माज्जगत्कारणे सर्वज्ञे जिज्ञास्ये ब्रह्मणि वेदान्तानां समन्वयो नान्यत्रेति सिद्धम् ॥ २८ ॥

अस्मिंश्चतुर्थपादे अष्टावधिकरणानि । सूत्राण्यष्टाविंशतिः ।

**चतुस्त्रिंशत्परं सूत्रं शतकं तु समन्वये ।**
**अध्याये तद्वदेकोनचत्वारिंशन्नया मताः ॥**
**ब्रह्मनाम्नि परे धाम्नि प्रत्यपादि समन्वयः ।**
**त्रय्यन्तसन्ततेर्यस्मिंस्तदस्मि ज्योतिराततम् ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां

**ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

प्रथमाध्यायस्य चतुर्थः पाद ।

समाप्तश्च समन्वयाध्याय ।

---

## अथ द्वितीयोऽध्यायः ।

* १ स्मृत्यधिकरणम् ।

**इत्थं** प्रथमेऽध्यायेऽभिहितसमन्वयस्य स्मृत्यादिविरोधे तन्निरसनमनेन क्रियत इति विषयविषयिभावसङ्गत्यायं द्वितीयोऽध्याय आरभ्यते । अत्र पूर्वमतिदेशाधिकरणे प्रधानवदशब्दत्वमण्वादीनामप्यभिहितम् । अधुना प्रधानस्य वैदिकशब्दत्वाभावेऽपि स्मृतिरूपशब्दवत्त्वमाक्षिप्य परिह्रियत इत्याक्षेपसङ्गत्येदमाह—

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

अत्र पूर्वपक्षे स्मृतिविरोधे समन्वयासिद्धिः सिद्धान्ते तदविरोधे तत्सिद्धिरिति फलभेदः । उक्तसमन्वयः किं सांख्यस्मृत्या विरुध्यत उत नेति सन्देहे महर्षि-

प्रणीतप्रधानकारणवादस्मृतीनामनवकाशरूपदोषप्रसङ्गात् समन्वयो विरुध्यत इति प्रधानानुगुणतया श्रुतयो नेया इति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु न समन्वयो विरुध्यते, कुतः, अन्यस्मृत्यनवकाशदोषप्रसङ्गात्। चेतनं प्रकृत्य 'तस्मादव्यक्तमुत्पन्नं त्रिगुण द्विजसत्तम!' इत्यादिकानां चेतनकारणत्ववादिनीनामन्यासां स्मृतीनामनवकाशदोषः प्रसज्येत। अतः स्मृतिद्वयविरोधेऽपि श्रुत्यविरुद्धा स्मृतिः प्रमाणमित्यप्रमाणसांख्यस्मृत्या समन्वयो न विरुध्यत इत्यर्थः ॥ १ ॥

इतश्च साङ्ख्यस्मृतेरनवकाशो न दोष इत्याह—

## इतरेषां चानुपलब्धेः ॥ २ ॥

साङ्ख्यस्मृतिप्रसिद्धानामितरेषां महदादितत्त्वानां लोके वेदे चानुपलब्धेश्च साङ्ख्यस्मृतेरप्रामाण्यं न दोषः। तथा च तदेकदेशप्रधानस्मृतेरप्यप्रामाण्यमिति भावः ॥ २ ॥

* २ योगप्रत्युक्त्यधिकरणम् *

उक्तन्यायमन्यत्राप्यतिदिशति—

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

अस्यातिदेशत्वान्न पृथक्सङ्गत्यपेक्षा। फलन्तु पूर्ववत्। उक्तसमन्वयः किं योगस्मृत्या विरुध्यते न वेति सन्देहे श्रुतिसिद्धयोगप्रतिपादकत्वेन प्रामाण्यात् तया प्रधानकारणवादिन्या समन्वयो विरुध्यत इति पूर्वः पक्षः। सिद्धान्तस्तु एतेन साङ्ख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्युक्ता प्रत्याख्याता द्रष्टव्या। श्रुत्यविरुद्धाष्टाङ्गयोगे तात्पर्यवत्त्वेन प्रामाण्येऽपि तद्विरुद्धप्रधाने तात्पर्याभावादप्रामाण्यमिति भावः ॥ ३ ॥

* ३ विलक्षणत्वाधिकरणम् *

पूर्वं वेदविरुद्धस्मृतेर्मूलाभावादप्रामाण्यमुक्तम्। तर्हि तर्कस्य व्याप्तिपक्षधर्मतयोर्मूलत्वे लोकसिद्धत्वात् तेन विरोध इति प्रत्युदाहरणसङ्गत्येदमाह—

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अत्र पूर्वोत्तरपक्षयोः समन्वयासिद्धिस्तत्सिद्धिरिति फलभेदः। आकाशादिकं न चेतनप्रकृतिकं द्रव्यत्वाद् घटवदिति तर्केण समन्वयो विरुध्यते न वेति सन्देहे पूर्वः पक्षः। न जगच्चेतनप्रकृतिकं, कुतः, विलक्षणत्वाद् अस्याचेतनस्य

जगतश्चेतनाद्विलक्षणत्वाद् । यद् यद्विलक्षणं न तत् तत्प्रकृतिकं, यथा तन्तुविलक्षणो घटो न तन्तुप्रकृतिक इति । ननु ब्रह्मजगतोर्वैलक्षण्यं कुत., तथात्वं च शब्दात् तथात्वं वैलक्षण्यं 'विज्ञानं चाविज्ञानं चाभवद्' (तै. २-६) इत्यादिश्रुतितोऽवगतमित्यर्थः ॥ ४ ॥

**ननु** 'ते हेमे प्राणा अहं श्रेयसे विवदमाना' (बृ. ६. १. ७) इत्यादिकाभिः श्रुतिभिर्ब्रह्मवज्जगच्चेतनमवगम्यत इत्याशङ्क्याह—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

उक्तशङ्कानिरासार्थस्तुशब्दः । उक्तश्रुतिभिर्न जगतश्चेतनत्वं प्रत्येतव्यम् । यतः प्राणाद्यभिमानिनीनां देवताना तत्र व्यपदेशो भवति न प्राणादिमात्रस्य, कुत , विशेषानुगतिभ्यां विशेषण विशेषः अनुगतिश्च ताभ्याम् । 'एता हवै देवता अहं श्रेयसे विवदमाना' (कौ. २. १४) इति प्राणाना चेतनवाचिना देवताशब्देन विशेषितत्वाद् 'अग्निर्वाग् भूत्वा मुखं प्राविशद्' (ऐ आ. २-४-२-४) इत्यादि (तत्रा[१]) मन्त्रार्थवादादिषु सर्वत्र तदभिमानिदेवतानामनुगतिश्रवणाच्च न चेतनं जगत् । तस्मादचेतनस्य जगतो वैलक्षण्यान्न चेतनप्रकृतिकत्वम् ॥ ५ ॥

**एवं** पूर्वपक्षे सिद्धान्तः—

## दृश्यते तु ॥ ६ ॥

पूर्वपक्षनिरासार्थस्तुशब्दः । **यदुक्तं** चेतनविलक्षण जगन्न तत्प्रकृतिकमिति **तन्न** । चेतनात् पुरुषात् तद्विलक्षणाना नखलोमादीनामचेतनानामचेतनाच्च गोमयाच्चेतनवृश्चिकादीनामुत्पत्तिर्यतो दृश्यते अत इत्यर्थः । प्रकृतिविकारयोरत्यन्तसादृश्ये प्रकृतिविकारभावानुपपत्त्या यत् किञ्चित् सादृश्य वाच्यम् । तच्च प्रकृतेऽपि जगत्स्फुरणाद्यनुवृत्त्या समानमिति भावः ॥ ६ ॥

असत्कार्यवादमाशङ्क्य निराचष्टे—

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

चेतनस्य नामरूपादिहीनस्याचेतननामादिमज्जगद्धेतुत्व उत्पत्तेः पूर्वं जगदसदेव स्यादिति चेन्न, कुतः, प्रतिषेधमात्रत्वाद् असत् स्यादिति योऽय प्रतिषेधस्तन्मात्रत्वाद्, न तु प्रतिषेध्यमस्तीत्यर्थः । कार्यसत्तायाः कारणाव्यतिरेकात् स्थितिदशायामिवोत्पत्तेः पूर्वमपि ब्रह्मात्मकमेवेदं जगन्नासादिति भावः ॥ ७ ॥

जगद्ब्रह्मणोरुक्तं कार्यकारणत्वममृष्यमाणश्चोदयति—

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

शुद्धत्वादिगुणकं ब्रह्म जगदुपादानमित्यसमञ्जसं, कुतः, अपीतौ तद्वत्प्रसङ्गाद् अपीतौ प्रलयसमये तद्वत् कार्यवत् कारणस्यापि ब्रह्मणोऽशुद्धत्वादि प्रसज्येतेत्यर्थः । प्रलये अशुद्ध्यादिगुणकं जगद् ब्रह्मणि लीयमानं स्वनिष्ठाशुद्ध्यादिधर्मैर्ब्रह्म दूषयेदिति भावः ॥ ८ ॥

एवमाक्षेपे परिहरति—

**न तु दृष्टान्तभावात् ॥ ९ ॥**

तुरेवकारार्थः । पूर्वोक्तमसमञ्जसं नास्त्येव, कुतः, दृष्टान्तभावात् । कार्यं कारणे लीयमानं स्वधर्मेण कारणं न दूषयतीत्यस्मिन्नर्थे शतशो दृष्टान्तानां यथा घटादिकं कार्यं मृदि लीयमानं मृदं स्वधर्मेण न दूषयतीत्येवमादिकानां सत्त्वादित्यर्थः ॥ ९ ॥

इत्थं स्वपक्षे दोषान् परिहृत्य तानेव परपक्षे योजयति—

**स्वपक्षे दोषाच्च ॥ १० ॥**

ये दोषा विलक्षणत्वात् प्रकृतिविकारभावानुपपत्तिरुत्पत्तेः प्राग् जगतोऽसत्त्वप्रसङ्गोऽपीतौ तद्वत् प्रसङ्ग इति साङ्ख्येनोद्भाविताः, ते साङ्ख्यपक्षेऽपि समानाः शब्दादिहीनप्रधानसकाशाच्छब्दादिमतो विलक्षणस्य जगत उत्पत्त्यङ्गीकारादित्यर्थः । वस्तुतः प्रपञ्चसत्यत्ववादिनः साङ्ख्यस्यैवैते दोषाः न मेऽनिर्वचनीयवादिन इति भावः ॥ १० ॥

इतश्च न केवलेन तर्केण समन्वयो विरुध्यत इत्याह—

**तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥**[1]

यतस्त एकेन तार्किकेणानुमितोऽप्यर्थोऽन्येन श्रेष्ठतरेणान्यथा नीयत इति केवलस्य तर्कस्याप्रतिष्ठानादप्यप्रतिष्ठितत्वाच्च न तेन समन्वयविरोधशङ्केत्यर्थः । ननु कस्यचित् तर्कस्याप्रतिष्ठितत्वेऽपि कस्यचित् प्रतिष्ठितत्वसम्भवात् तेन समन्वयविरोधशङ्का युक्तेत्याक्षिपति 'अन्यथानुमेयमिति चेद्' अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण समन्वयविरोधादिकमनुमेयमिति चेदत्र समाधत्ते । एवम-

---

१. 'प्यविमोक्ष' मुद्रितब्रह्मसूत्रपुस्तकेषु पाठो दृश्यते.

प्यन्यत्र तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृते लिङ्गादिहीने ब्रह्मणि वेदानिरपेक्षस्य तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षप्रसङ्गः । यद्वा महतां कपिलकणादादीनां परस्परविप्रतिपन्नैरागमनिरपेक्षैस्तर्कैस्तत्त्वनिर्णयाभावादनिर्मोक्षप्रसङ्गः । तस्मादागमविरोधितर्कोऽप्रमाणमिति न तेन विरोध इति सिद्धम् ॥ ११ ॥

: ४ शिष्टापरिग्रहाधिकरणम् :

उक्तन्यायमन्यत्रातिदिशति—

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

अस्यातिदेशत्वान्न पृथक् सङ्गत्यपेक्षा । फलं तु पूर्ववत् । ब्रह्म न जगदुपादानं विभुत्वाद् व्योमवदित्यादितार्किकाभिमतन्यायेन ब्रह्मकारणबोधक समन्वयो विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्वः पक्ष. । सिद्धान्तस्तु एतेन मन्वादिभि. शिष्टैः केनचित्कार्यवादाद्यंशेन परिगृहीतप्रधानवादनिराकरणप्रकारेण शिष्टापरिग्रहाः शिष्टै. केनचिदप्यंशेनापरिगृहीता अण्वादिकारणवादा व्याख्याता निरस्ता द्रष्टव्याः । अतस्तार्किकन्यायस्य वेदबाधितत्वान्न तेन विरोध इति सिद्धम् ॥ १२ ॥

: ५ भोक्त्रापत्त्यधिकरणम् :

**पूर्वं** ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे प्रत्यक्षस्य प्रतिष्ठितत्वाद् विरुध्यत एवेति प्रत्युदाहरणसङ्गत्येदमाह—

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

फलं तु पूर्ववत् । अद्वितीयब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयः प्रत्यक्षेण विरुध्यते न वेति सन्देहे अद्वितीयब्रह्मणो जगदुपादानत्वे भोक्तृभोग्यप्रपञ्चस्य सर्वस्य ब्रह्मानन्यत्वेन भोग्यशब्दादेर्भोक्त्रात्मकत्वापत्तेर्भोक्तुर्भोग्यात्मकत्वापत्तेः प्रत्यक्षसिद्धः परस्परविभागो न स्याद् । अतः प्रत्यक्षेण समन्वयो विरुध्यत इति चोदितेति पूर्वः पक्षः । सिद्धान्तस्तु 'स्याल्लोकवत्' एकब्रह्मोपादानकत्वेऽपि भोक्तृभोग्यप्रपञ्चस्य परस्परं विभागः स्याल्लोकवद्, यथा लोके मृदात्मना भिन्नाना घटादीनां परस्पर भेदोऽस्ति तद्वत् । अतः कल्पितत्वान्न प्रत्यक्षविरोध इति सिद्धम् ॥ १३ ॥

: ६ आरम्भणाधिकरणम् :

**पूर्वं** परिणामवादमालम्ब्यापाततः स्याल्लोकवदिति समाधानमभिहितम् । अधुना विवर्त्तवादमाश्रित्य परमं समाधानमभिधीयत इत्येकफलत्वसङ्गत्येदमाह—

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

फल तु पूर्ववत् । अद्वैतब्रह्मवादिसमन्वयो भेदग्राहिप्रत्यक्षेण विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्व. पक्ष. । सिद्धान्तस्तु तत् तस्मात् कारणाद् ब्रह्मणः कार्यस्य जगतोऽनन्यत्वं पृथक्सत्ताराहित्यं, कुतः, आरम्भणशब्दादिभ्यः । 'वाचारम्भणं विकारो नामधेय मृत्तिकेत्येव सत्यम्' (छा. ६-१-४) 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा' (छा. ६-८-७) 'ब्रह्मैवेदं सर्वम्' (नृ. ७) इत्यादिशब्देभ्यः ॥ १४ ॥

ब्रह्मव्यतिरेकेण कार्यस्याभावेऽनुमानमाह—

## भावे चोपलब्धेः ॥ १५ ॥

कारणस्य ब्रह्मणो भावे सत्त्वे कार्यस्योपलब्धे. मृदि सत्यां घटस्येव । न हि मृद्व्यतिरेकेण घटो नाम कश्चिदुपलभ्यते । अतः कारणस्य व्यतिरेकेण कार्यं नास्तीत्यर्थः ॥ १५ ॥

कारणव्यतिरेकेण कार्यस्याभावे श्रुतार्थापत्ति प्रमाणान्तरमाह—

## सत्त्वाच्चावरस्य ॥ १६ ॥

अवरस्य कार्यस्योत्पत्ते. प्राक् कारणानन्यत्वेन सत्त्वाद् 'ब्रह्म वा इदमग्र आसीद्' (बृ. १-४-१०) इत्यादौ सत्त्वश्रवणादुत्पत्त्यनन्तरमनन्यत्वं सिद्धमित्यर्थः ॥ १६ ॥

प्रागुत्पत्तेः कारणात्मना कार्यस्य सत्त्वमुक्तमाक्षिप्य समाधत्ते —

## असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

'असद्वा इदमग्र आसीद्' (तै. २-७-१) इत्यादिना प्रागुत्पत्तेरसत्त्वव्यपदेशान्न कार्यस्य कारणात्मना सत्त्वमिति चेन्न । न ह्यत्यन्तासत्त्वाभिप्रायेणायमसत्त्वव्यपदेशः, किन्तु व्याकृतत्वरूपधर्मापेक्षया । अव्याकृतत्वं धर्मान्तरम् । तेनायमसत्त्वव्यपदेशः, कुतः, वाक्यशेषात् 'तत् सदासीद्' (छा. ३-१९-१) इति वाक्यशेषात् । अतः कारणादनन्यत्वं कार्यस्य सिद्धमित्यर्थः ॥ १७ ॥

किञ्च—

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

मृदात्मना पूर्वं घटस्यासत्त्वे मृदेव घटार्थिना नोपादीयेत असत्त्वाविशेषाद्

यत्किञ्चिदेवोपादीयेतेत्येवमाद्याया युक्तेः 'सदेव सोम्येदमग्र आसीद्' (छा ६-२-१) इत्यादौ विद्यमानसच्छब्दान्तराच्च प्रागुत्पत्तेः कार्यस्य कारणादनन्यत्वं सत्त्वं चेति सिद्धम् ॥ १८ ॥

ननु मृद्घटौ भिन्नौ विलक्षणविषयत्वाद् घटपटवदित्युक्तेर्हेतोर्व्यभिचारमाह—

**पटवच्च ॥ १९ ॥**

यथा संवेष्टितप्रसारितपटस्य विलक्षणप्रतीतिविषयत्वेऽपि न भेदस्तथा मृद्घटयोरित्यर्थः ॥ १९ ॥

ननु कार्यमुपादानाद्भिन्नं भिन्नकार्यकरत्वात् सम्मतवदित्युक्तेर्हेतोर्व्यभिचारमाह—

**यथा च प्राणादिः ॥ २० ॥**

यथा च प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निष्पादयति, अनिरुद्धस्त्वाकुञ्चनप्रसारणादिकं कार्यं निर्वर्त्तयति, नैतावता प्राणादेर्भेदोऽस्ति । तस्मात् कार्यकारणयोरनन्यत्वादद्वैतब्रह्मसमन्वये न कश्चिद्विरोध इति सिद्धम् ॥ २० ॥

( ७ इतरव्यपदेशाधिकरणम् )

पूर्वं कार्यस्य कारणादनन्यत्वमेकविज्ञानप्रतिज्ञासिद्धये समर्थितम् । तर्हि तेनैव न्यायेन जीवब्रह्मणोरप्यभेदाज्जीवधर्मा हिताकरणादयो ब्रह्मणि प्रसज्येरन्नित्याक्षेपसङ्गत्येदमाह—

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

फलन्तु पूर्ववत् । यदि ब्रह्म जगज्जनयेत्तर्हि स्वानिष्टं जनयेदिति तर्केण जीवाभिन्नं ब्रह्म जगदुपादानमिति ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे पूर्वः पक्षः इतरव्यपदेशाद् इतरस्य जीवस्य 'तत्त्वमस्या'दिना ब्रह्मत्वव्यपदेशात् । इतरस्य ब्रह्मणो वा 'अनेन जीवेनात्मनानुप्रविश्य' (छा. ६-३-२) इत्यादिना शारीरत्वव्यपदेशाद् ब्रह्मणः स्रष्टृत्वे जीवस्यैव स्रष्टृत्वाद्धिताकरणादिदोषप्रसक्तिः । नञ्व्यत्यासेनाहितजरामरणादिबहुविधानर्थकरणरूपदोषस्य प्रसक्तिर्ब्रह्मण इष्यतस्तस्याभ्रान्तचेतनत्वेनानिष्टजगज्जनकत्वायोगादुक्तसमन्वयो विरुध्यत इत्यर्थः ॥ २१ ॥

एवं पूर्वपक्षे सिद्धान्तः—

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यतः शारीरादधिकं सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृ चेति ब्रूमस्ततो न हिताकरणादिदोषप्रसक्तिः, कुतः, भेदनिर्देशाद् 'आत्मा वारे द्रष्टव्य' (बृ. २. ४. ५) इत्यादिना कल्पितभेदस्य व्यपदेशात् । न हि ब्रह्मणो नित्यमुक्तस्य हितमहितं वा किञ्चित् समस्ति येन हिताकरणादिदोषः प्रसज्येत । अतः कल्पितभेदमादायैव सर्वस्यासाङ्कर्योपपत्तेरिति तात्पर्यम् ॥ २२ ॥

नन्वेकरूपब्रह्मणो जगत्कारणत्वे कार्यवैचित्र्यं न स्यादिति दोषं दृष्टान्तेन परिहरति—

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

एकपृथिवीजन्यानां यथाश्मनां वज्रवैदूर्यादिभेदेन वैचित्र्यं, तथा ब्रह्मकार्याणां स्वरूपवैचित्र्यं युज्यते । अतस्तदनुपपत्तिः । तस्माज्जीवाभिन्नब्रह्मवादिसमन्वयो न विरुध्यत इति सिद्धम् ॥ २३ ॥

८ उपसंहाराधिकरणम्

पूर्वमौपाधिकजीवभेदाद्धिताकरणादिदोषो नास्तीत्युक्तम् । साम्प्रत्युपाधितोऽपि ब्रह्मणो विभक्तं कारणादिकं नास्ति ब्रह्मनानात्वाभावादिति प्रत्युदाहरणसङ्गत्येदमाह—

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

फलं तु पूर्ववत् । न ब्रह्मोपादानं कर्तृ वा असहायत्वात् सम्मतवद् इति न्यायेनासहायाद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देह उपसंहारदर्शनाल्लोके कुलालस्य कर्तुर्दण्डचक्राद्युपसंहारदर्शनान्मृदो वोपादानस्य स्वभिन्नकुलालादिसहायदर्शनात् तदुभयविलक्षणस्य ब्रह्मणो न जगत्कर्तृत्वमुपादानत्वं वा सम्भवति । अतः समन्वयो विरुध्यत इति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु क्षीरवद्धि । हिशब्दो हेत्वर्थः । यथा लोके क्षीरं बाह्यसाधनान्यनपेक्ष्य दध्याकारेण परिणमते तद्वद् ब्रह्मापि । (श्रुतिरपि)ब्रह्मणोऽसहायस्य कार्यकारित्वं दर्शयति 'न तस्य कार्यं करणं च विद्यते' (श्वे. ६-८) इति ॥ २४ ॥

ननु चेतनत्वे सति ससहायत्वं हेतुः । अतो न क्षीरे व्यभिचार इत्याशङ्क्य चेतनदृष्टान्तेन तस्य व्यभिचारमाह—

## देवादिवदपि लोके ॥ २५ ॥

लोक्यतेऽनेनेति लोकः शब्दो मन्त्रार्थवादेतिहासादिः । तस्मिन् यथा देवाः पितर ऋषय इत्येवमादयश्चेतना स्वसिद्धिसामर्थ्यात् साधनान्तरं बाह्यमनपेक्ष्य सङ्कल्पमात्रेणैव नानाविधकार्यकर्त्तार उपलभ्यन्ते, तद्वद् ब्रह्माप्यसहायमेव जगदुपादानं कर्तृ चेति तद्वादिसमन्वयो न विरुध्यत इति सिद्धम् ॥ २५ ॥

* ९ कृत्स्नप्रसक्त्यधिकरणम् *

पूर्वं क्षीरादिदृष्टान्तकथनेन ब्रह्मणः परिणामित्वभ्रमोत्पत्तेस्तन्निरसनमनेन क्रियत इति कार्यकारणभावसङ्गत्येदमाह—

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

पूर्वाधिकरणस्य भ्रमोत्पादक(त्वमेव तस्य[1]) कार्यत्वमिति बोध्यम् । फलं तु पूर्ववत् । सावयवस्यैव नानाकारेण परिणाम इति न्यायेन निरवयवत्वाद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे पूर्वः पक्षः । सिद्धान्ती प्रष्टव्यः किं ब्रह्म निरवयव परिणमते सावयवं वा । आद्ये कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामप्रसक्तिः । ततश्च कार्यातिरिक्तं ब्रह्म न स्यात् । द्वितीये कृत्स्नप्रसक्तिर्नास्ति एकांशपरिणामेऽप्यपरांशस्थितिसम्भवात् । तथापि 'निष्कल'मित्यादिनिरवयवत्वशब्दकोप. । उभयपक्षेऽप्यनित्यत्वप्रसङ्ग इति ब्रह्मण उपादानत्ववादी समन्वयो विरुध्यत इति ॥ २६ ॥

सिद्धान्तस्तु—

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुः पूर्वपक्षनिरासार्थः । न तावत्कृत्स्नप्रसक्तिः, कुतः, श्रुतेः ब्रह्मणो जगदुपादानत्वश्रवणाद् 'तावानस्य महिमा' (छा. ३-१२-६) इत्यादौ कार्यव्यतिरेकेण सत्ताश्रवणात् । एवञ्च विवर्त्तवादः श्रुत्यैव स्फुटीकृतः । न हि परिणामवादे कार्यव्यतिरेकेण सत्ता समस्ति । अतः कार्यातिरेकेण ब्रह्मणोऽवस्थानश्रुतेर्नोक्तदोषावकाशः । ननूक्तयुक्तिबाधितत्वाच्छ्रुतिर्वा कथ कार्यातिरेकेण ब्रह्मणः सत्तां बोधयेदित्यत आह शब्दमूलत्वाद् ब्रह्मणः शब्दैकप्रमाणकत्वाद् यथाशब्दं कार्योपादानत्वं तदतिरेकेण सत्त्वं चाविरुद्धमित्यर्थः ॥ २७ ॥

---

१. 'त्वादेवैतस्य' इति पठनीय भाति.

जगतो ब्रह्मविवर्त्तत्वेन स्वप्नप्रपञ्चवन्मायिकत्वात् तदुपादानत्वेऽपि ब्रह्मणो न कृत्स्नप्रसक्त्यादिदोषः स्वप्नसाक्षिण इवेत्याह–

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

हि यस्माद्धेतोरेकस्मिन्नात्मनि स्वप्नदृशि निरवयवे विचित्राः सृष्टयः श्रूयन्ते–'न तत्र रथा न रथयोगाः' (बृ. ४-३-१०) इत्यादौ। यथा च लोके मायाविनि स्वरूपानुपमर्देनैव हस्त्यश्वादिविचित्राः सृष्टयो दृश्यन्ते, एवमेकस्मिन्नपि ब्रह्मणि विविधसृष्टिरित्यर्थः ॥ २८ ॥

'यश्चोभयोः समो दोष' इति न्यायेन कृत्स्नप्रसक्त्यादीनामनुद्भाव्यत्वं दर्शयति–

## स्वपक्षदोषाच्च ॥ २९ ॥

साङ्ख्यादयोऽपि निरवयवं प्रधानं जगत्परिणामीत्यङ्गीचक्रुः। तथा च कृत्स्नप्रसक्त्यादिदोषः समानः। अणुवादिनोऽपि परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमुररीचक्रुः। स संयोगः किं व्याप्यवृत्तिरव्याप्यवृत्तिर्वा। आद्ये दृष्टविरोधः। द्वितीये सावयवत्व विनाव्याप्यवृत्तिसंयोगानुपपत्तिर्निरवयवत्वव्याकोप इत्यादिदोष समानः। ब्रह्मवादे स दोषो न समस्ति। तस्मादुपपन्नो ब्रह्मकारणवादः ॥ २९ ॥

* १० सर्वोपेताधिकरणम् *

पूर्वोक्तविचित्रकार्यशक्तिमत्त्वविषयशङ्कानिरासेन समर्थनात्मकत्वाद् विषयविषयिभावसङ्गत्येदमाह–

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

फलं पूर्ववत्। 'अशरीरस्य न माये'ति न्यायेन मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्वः पक्षः। सिद्धान्तस्तु सर्वोपेता सर्वशक्तियुक्ता परा देवता, कुतः, तद्दर्शनात् तस्य सर्वशक्तियोगस्य 'सर्वकर्मा सर्वकामः'(छा. ३-१४-४) इत्यादिश्रुतौ दर्शनादित्यर्थः ॥ ३० ॥

पूर्वपक्षमनुभाष्य दूषयति–

## विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३१ ॥

सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वमवगम्यते ब्रह्मणः 'अचक्षुष्कमश्रोत्रम्' (बृ. ३-८-८) इत्यादिना विकरणत्वावगमान्न कर्तृत्वमिति चेद् अत्र यदुत्तरं वक्तव्यं तत् पूर्वमेव 'न विलक्षणत्वाद्' (ब्र. २-१-४),

'देवादिवदपि लोके' (ब्र. २-१-२५) इत्यादावुक्तम् । अथवा 'अपाणिपादो जवन' (श्वे. ३-१९) इत्यादिश्रुत्योत्तरमुक्तमिति श्रुत्येकसमधिगम्यत्वान्न तर्केण विरोधशङ्कावकाश इति ॥ ३१ ॥

* ११ प्रयोजनवत्त्वाधिकरणम् *

पूर्वं श्रुत्यवष्टम्भेन सर्वशक्तिमतो ब्रह्मणः कर्तृत्वमवादि । तदाक्षिप्य समाधानादाक्षेपसङ्गत्येदमाह—

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

फलं पूर्ववत् । ब्रह्म न फलेन विना सृजत्यभ्रान्तचेतनत्वात् सम्मतवदिति न्यायेनापास्तसमस्तकामाद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे पूर्वः पक्षः—न ब्रह्मणो जगत्कर्तृत्वं सम्भवति नित्यतृप्तत्वेन प्रयोजनाभिसन्धिरहितत्वात् प्रेक्षावत्प्रवृत्ते प्रयोजनवत्त्वाभ्युपगमात् समन्वयो विरुध्यत इति ॥

सिद्धान्तस्तु—

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुः पूर्वपक्षनिरासार्थः । यथा लोके राजतदमात्यादीनां फल विनैव केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वोच्छ्वासादयः स्वभावादेवोत्पद्यन्ते, तथा ब्रह्मणो विचित्रकार्यरचना लीलाकैवल्य केवललीलामात्र न फलसापेक्षम् । कथञ्चिद्राजादीनां फलसम्भवेऽपि नित्यतृप्तस्य ब्रह्मणो लीलामात्रमेतदित्यभिप्रायः ॥ ३३ ॥

* १२ वैषम्यनैर्घृण्याधिकरणम् *

पूर्वं मायामय्या लीलया ब्रह्मणः स्रष्टृत्वमवादि । तदाक्षिप्य समाधानादाक्षेपसङ्गत्येदमाह—

## वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥

फलं पूर्ववत् । यो यो विषमसृष्टिकर्त्ता स सावद्य इति न्यायेन निरवद्याद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे, ब्रह्म किं प्राणिकर्मसापेक्षं जगत्कर्तृ, निरपेक्ष वा । आद्ये अनीश्वरत्वप्रसङ्गात् । द्वितीये वैषम्यनैर्घृण्ये प्रसज्येयाताम् । कांश्चित्तिर्यगादीनत्यन्तदुःखिन उत्पादयति, कांश्चिन्मनुष्यादीन् सुखदुःखसाधारणान्, कांश्चिद् देवादीनत्यन्तसुखिन इति वैषम्यम् । सर्वसंहर्तृत्वाच्च नैर्घृण्यम् । ततश्च सावद्यत्वं प्रसज्येत । अतो निरवद्यस्य ब्रह्मणो न जगत्कर्तृत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु ब्रह्मणो वैषम्यनैर्घृण्ये न स्यातां, कस्मात्, सापेक्षत्वात् प्राणिकर्मसापेक्षत्वात् । कर्मानपेक्षत्वे हि वैषम्यादिदोषः स्यात् । न च सापेक्षत्वे निरीश्वरत्वप्रसङ्गः भृत्यादिसेवानुसारेण फलदातृ राज्ञो राजत्वदर्शनात् । ननु कस्माद्

ब्रह्मणः कर्मसापेक्षत्वमत आह तथा हि दर्शयति 'एष ह्येव साधु कर्म कारयति' (कौ. ब्रा. ३-८) इत्याद्या श्रुतिरित्यर्थः ॥ ३४ ॥

सापेक्षत्वमाक्षिप्य समाधत्ते—

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेव' (छा. ६-२-१) इत्यादिना सृष्टेः प्रागविभागावधारणान्न तदानीं कर्मास्ति। ततः कर्मापेक्षया विषमा सृष्टिरित्यसङ्गतमिति चेद्, न, अनादित्वात् संसारस्य बीजाङ्कुरवद्धेतुहेतुमद्भावोपपत्तेरित्यर्थः ॥ ३५ ॥

ननु कुतः संसारस्यानादित्वमित्यत आह—

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

संसारस्यानादित्वमुपपद्यते च। अन्यथाकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात् पूर्वसृष्टिसादृश्यानुपपत्तेश्च। उपलभ्यते च संसारस्यानादित्व 'धाता यथापूर्वमकल्पयत्' (ऋ. स. १०-१९०-३) "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा' (गी. १५-३) इति श्रुतिस्मृत्योरित्यर्थः ॥ ३६ ॥

* १३ सर्वधर्मोपपत्त्यधिकरणम् *

पूर्वं विषमसृष्टिप्रयोजककर्मणः सत्त्वाद् ब्रह्मणो विषमसृष्टिहेतुत्वमुक्तम्। तद्वदुपादानत्वप्रयोजकगुणवत्त्वस्याभावान्नोपादानत्वमिति प्रत्युदाहरणसङ्गत्येदमाह—

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

फल पूर्ववत्। यन्निर्गुण तन्नोपादानं यथा गन्ध इति न्यायेन निर्गुणब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्वः पक्षः। सिद्धान्तस्तु जगत्कारणत्वसर्वज्ञत्वादयः कारणधर्मा ये विद्यन्ते, तेषा सर्वेषां पूर्वोक्तप्रकारेण ब्रह्मण्येवोपपत्तेर्ब्रह्मैव जगत्कारणमित्यर्थः। अय भावः—यन्निर्गुणं तन्नोपादानमिति व्याप्तौ किं परिणामित्वाभावो व्यापक उत विवर्तोपादानत्वाभावः। नाद्यः, इष्टत्वात्। न द्वितीयः, आरोपितानित्यत्वोपादाने जात्यादौ व्यभिचारात्। अतो निर्गुणत्वेऽपि ब्रह्मणो न विवर्तजगदुपादानत्व विरुद्धमिति। तस्मान्न कथमपि समन्वयविरोध इनि सिद्धम् ॥ ३७ ॥

अस्मिन् पादे त्रयोदशाधिकरणानि। सूत्राणि सप्तत्रिंशत्।

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

द्वितीयाध्यायस्य प्रथमः पादः।



## अथ द्वितीयः पादः ।

* १ रचनानुपपत्त्यधिकरणम् *

इत्थं मुमुक्षोः सम्यग्ज्ञानोत्पादके त्र्यन्तसमन्वये परपरिकल्पितदोषनिरासेन स्वपक्षः स्थापितः । अधुना मुमुक्षोर्निर्दोषेऽद्वैतदर्शने निर्विचिकित्सप्रवृत्तिसिद्धये परमतदूषणप्रधानः पादोऽयमारभ्यते । एवञ्च समन्वयविरोधनिरासेन स्वपक्षस्थापनपरप्रथमपादेनास्य परमतनिरासनपरस्य परपादस्योपजीव्योपजीवकभावः सङ्गतिः । 'सर्वधर्मोपपत्तेश्च' (२.१.३७) इत्यनेन ब्रह्मणि कारणधर्माणामुपपत्तिरुक्ता । तेषां प्रधान एवोपपत्तिः किं न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपलक्षणावान्तरसङ्गत्येदमधिकरणमारभते—

### रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

अत्र पूर्वपक्षे सांख्ययुक्तिविरोधात् समन्वयासिद्धिः सिद्धान्ते तदविरोधात् तत्सिद्धिरिति फलभेदः । प्रधानमचेतनं जगदुपादानमिति साङ्ख्यसिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति सन्देहे जगत् सुखदुःखमोहात्मकवस्तूपादानकं तदन्वितत्वान्मृदन्वितघटवदित्यनुमानेन यत्सुखाद्यात्मकं सिद्धं तदेव त्रिगुणात्मकं प्रधानम् । अतः प्रामाणिकः सांख्यसिद्धान्त इति पूर्वः पक्षः । नोक्तानुमानसिद्धं प्रधानं जगदुपादानं, कुतः, रचनानुपपत्तेः अचेतनात् स्रष्टव्यज्ञानशून्यात् प्रधानादनेकविधविचित्रजगद्रचनानुपपत्तेरित्यर्थः। लोके विचित्रप्रासादादिरचनाया बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनादिति भावः । सूत्रे चशब्देन हेतोः स्वरूपासिद्धिं समुच्चिनोति । सुखादीनामान्तरत्वप्रतिपत्तेस्तदन्वितत्वं जगतोऽसिद्धम् । तस्मान्न प्रामाणिकः सांख्यसिद्धान्त इति ॥ १ ॥

यत्तु शक्तितः प्रवृत्तेरिति तत्राह—

### प्रवृत्तेश्च ॥ २ ॥

लोके अचेतनरथादिप्रवृत्तेश्चेतनाधीनत्वदर्शनात् प्रधानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेश्चेतनप्रेरणमन्तरेणानुपपत्तेरित्यर्थः ॥ २ ॥

अन्यत्र व्यभिचारमाशङ्क्य परिहरति—

### पयोऽम्बुवच्चेत् तत्रापि ॥ ३ ॥

नन्वचेतनस्य स्वयं प्रवृत्तिर्दृश्यते यथा क्षीरं वत्सविवृद्धये स्वयमेव प्रवर्तते, यथा वा जलं स्वयमेव स्यन्दते तद्वत् प्रधानमपि स्वयमेव प्रवर्तते इति चेत्, तत्रापि परमात्मैव प्रेरकः श्रूयते 'योऽप्सु तिष्ठन्' (बृ. ३-७-४) इत्यादिना। तथा च पयोऽम्बुनोः पक्षत्वान्न व्यभिचार इति भावः ॥ ३ ॥

नन्वेवमपि धर्माद्यपेक्षया प्रधानस्य प्रवृत्तिः स्यादित्याशङ्क्याह—

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

साङ्ख्यमते गुणाः साम्येनावस्थिताः प्रधानं तद्व्यतिरेकेण सहकार्यन्तरस्यानवस्थितेः। पुरुषस्य तु असङ्गोदासीनत्वेन प्रवृत्तौ निवृत्तौ वानपेक्षत्वाभ्युपगमादित्यर्थः ॥ ४ ॥

ननु सहकार्यभावेऽपि प्रवृत्तिरन्यत्र दृष्टेत्यत आह—

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

तृणादिकं निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते। तद्वत् प्रधानमपीति चेन्न। कुतः, अन्यत्राभावाद् धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरभावस्याभावादित्यर्थः। धेन्वादिसापेक्षमेव तृणादिकं क्षीरीभवति निरपेक्षत्वे बलीवर्दादावपि क्षीरभावप्रसङ्गादिति भावः ॥ ५ ॥

प्रधानस्य स्वतः प्रवृत्तिमुपेत्यापि दूषयति—

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

प्रधानस्य स्वतः प्रवृत्त्यभ्युपगमेऽपि पुरुषार्थस्यापेक्षाभावप्रसङ्गादित्यर्थः। न चेष्टापत्तिः, प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्त्तत इति स्वाभ्युपगमविरोधादिति भावः ॥ ६ ॥

ननु पुरुष एव स्वयमप्रवर्त्तमानोऽपि प्रधानप्रवर्तकः स्यादित्याशङ्क्याह—

पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

लोके यथा पङ्गुः पुरुषः स्वयमप्रवर्तमानोऽप्यन्यमन्धं प्रवृत्तिशक्तिमन्तं प्रवर्त्तयति, यथा वायस्कान्तोऽश्मा सन्निधिमात्रेणायः प्रवर्त्तयति, एवं पुरुषः प्रवर्त्तक इति चेत्, तथापि प्रधानस्य पुरुषप्रेर्यत्वे स्वातन्त्र्याभ्युपगमविरोधः, पुरुषस्य प्रवर्त्तकत्वे कौटस्थ्यहानिरित्यादिदोषाणामनिर्मोक्षः। ब्रह्मणस्त्वाविद्यकं प्रवर्त्तकत्व-

मिति न कौटस्थ्यहानिः ॥ ७ ॥

अपि च—

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

साङ्ख्यमते गुणत्रयसाम्यावस्था प्रकृतिः । सा कूटस्था वा विकारिणी वा । आद्ये परस्परानपेक्षाणां गुणानां साम्यावस्थाप्रच्युत्यभावेनाङ्गाङ्गित्वानुपपत्ते कार्यानुदयप्रसङ्गः । द्वितीये स्वतः प्रच्युतिरुतान्यत. । नाद्य', सदा कार्यप्रसङ्गात् । न द्वितीयः, पुरुषस्यौदासीन्याभ्युपगमहाने. । अतः प्रच्युत्यभावेनाङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसङ्ग इत्यर्थः ॥ ८ ॥

गुणानामनपेक्षस्वभावत्वान्न प्रच्युतिरित्यत्रासिद्धिमाशङ्क्य परिहरति—

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

न वयमनपेक्षस्वभावान् कूटस्थान् गुणाननुमिमीमहे, अपि त्वन्यथा प्रकारान्तरेण गुणानन्योन्यसापेक्षान् । एवमनुमितौ न प्रागुक्तदोषप्रसक्तिरिति चेन्न, ज्ञशक्तिवियोगाद् गुणाना ज्ञानशक्तिरहितत्वादित्यर्थः । स्वतः प्रच्युत्यभावेनाङ्गाङ्गित्वानुपपत्तेः कार्यानुदयप्रसङ्गस्तदवस्थ एवेति भावः ॥ ९ ॥

इतश्चासङ्गतं साङ्ख्यमतमित्याह—

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

साङ्ख्या हि कचिन्महतः पञ्चतन्मात्रसर्गं साङ्गिरन्ते कचिदहङ्कारात्, कचिद् दशेन्द्रियाणि कचिद्वाद्वेन्द्रियाणि त्वागेन्द्रियेऽन्तर्भाव्य सप्तेन्द्रियाणीति । एवञ्च परस्परविप्रतिषेधादसमञ्जसं साङ्ख्यमतम् । तस्मात् साङ्ख्यसिद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥ १० ॥

* २ महद्दीर्घाधिकरणम् *

पूर्वं प्रपञ्चस्य प्रधाननिष्ठाशब्दत्वादिगुणानन्वयात् प्रधानोपादानकत्ववद् ब्रह्मगुणचेतनत्वानन्वयाद् ब्रह्मोपादानकत्वं न स्यादिति दृष्टान्तसङ्गत्येदमाह—

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

स्वपक्षदोषनिरासस्य स्मृतिपादसम्बन्धेऽयुक्तावान्तरसङ्गतिलाभार्थमिहेदमधिकरणं लिखितमिति बोध्यम् । फलं पूर्ववत् । चेतनाद् ब्रह्मणो जगत्सर्गं ब्रुवन्

समन्वयोऽत्र विषयः । स किं 'कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका' इति न्यायेन विरुध्यते न वेति सन्देहे विरुध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु ह्रस्व-परिमण्डलाभ्यां द्व्यणुकपरमाणुभ्या महद्दीर्घवच्चशब्दार्थाद् वाशब्दाद्ध्रस्वाणुवच्च चेतनाद् ब्रह्मणोऽचेतन जगद् भवतीति योजना । एतदुक्तं भवति— वैशेषिका हि ह्रस्वाणोर्द्व्यणुकान्महद् दीर्घं च त्र्यणुकं जायते द्व्यणुकनिष्ठह्रस्वत्वाणुत्वे त्र्यणुके स्वसमानजातीयह्रस्वत्वाणुत्वे नारभेते । किन्तु द्व्यणुकगतत्रित्वसङ्ख्या त्र्यणुके मह-त्त्वादिकमारभते । एव पारिमण्डलात् परमाणोरणु द्व्यणुकं जायते । परमाणुगतपा-रिमाण्डल्यं परिमाणं द्व्यणुके तादृश पारिमाण्डल्य नारभते, किन्तु परमाणुगतद्वित्व-सङ्ख्या द्व्यणुके ह्रस्वत्वादिकमारभत इति प्रक्रिया प्रदर्शयन्ति । इत्थ प्रदर्शयतां वैशेषिकाणां 'कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका' इति न्यायाभासं वदतां कथं न लज्जा भवेद्, व्यभिचारस्य स्फुटत्वात् । अतः समन्वयो न विरुध्यत इति सिद्धम् । 'एतेन शिष्टापरिग्रहा' (२-१-१२) इत्यस्यायं प्रपञ्च इत्यपौनरु-क्त्यम् ॥ ११ ॥

' ३ परमाणुजगदकारणत्वाधिकरणम् *

प्रासङ्गिकाव्यवहितेनास्य न सङ्गत्यपेक्षा । व्यवहितेन तु पूर्वं प्रधानस्य चेत-नानधिष्ठितत्वात् कारणत्वाभावे उक्ते तर्हि चेतनाधिष्ठिताः परमाणवः कारणं जगत इति प्रत्युदाहरणसङ्गत्येदमाह—

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

अत्र पूर्वपक्षे वैशेषिकसिद्धान्ताविरोधे समन्वयासिद्धिः सिद्धान्ते तदविरोधे तत्सिद्धिरिति फलभेदः । परमाणुप्रक्रियया जगदुत्पत्तिरिति वैशेषिकराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति सन्देहे प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु वैशेषिकाः खलु कर्मणा प्राक् सृष्टेर्निश्चलयोः परमाण्वोः संयोगे द्व्यणु-काद्युत्पत्तिरित्याचक्षते । तस्य कर्मणः किञ्चिन्निमित्तमभ्युपगम्यते वा न वा । आद्ये कर्मनिमित्तत्वेन प्रसिद्धं जीवप्रयत्नाभिघातादिकमङ्गीकर्तव्यम् । न हि तत् सम्भवति, सृष्ट्युत्तरकालीनत्वात् तस्य । द्वितीये कर्मानुत्पत्तिः । अत उभयथापि न कर्म, अदृष्टस्याचेतनस्य स्वतः कर्माभिमुख्यायोगात् । अतः कर्माभावात् तदभावः द्व्यणुकादिक्रमेण सृष्ट्युत्पादस्याभाव इति दिक् । तस्माद्वैशेषिकराद्धान्तो भ्रान्ति-मूल इति सिद्धम् ॥ १२ ॥

किञ्च—

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

तदभाव इत्यनुषङ्गः । तस्य द्व्यणुकादिसृष्ट्युत्पादस्याभावः, कुतः, परमाणुद्व्यणुकानां समवायाभ्युपगमात् । अस्त्वभ्युपगमः किं तेन, साम्यादनवस्थितेः यथैव द्व्यणुभ्यामत्यन्तभिन्नं सद् द्व्यणुकं समवायेन ताभ्यां सम्बध्यते, एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्नन्येन समवायेन समवायिभिः सम्बध्येत, अत्यन्तभेदसाम्यात् । ततश्च तस्य तस्यान्योऽन्यः समवायः कल्पनीय इत्यनवस्थानात् । एवं च समवायासिद्धौ समवेतद्व्यणुकादिसृष्ट्यसिद्धिः स्यादित्यर्थः ॥ १३ ॥

अपि च—

नित्यमेव च भावात् ॥ १४ ॥

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्नित्यमेव भावात् प्रलयाभावप्रसङ्गः, निवृत्तिस्वभावत्वे निवृत्तेर्नित्यमेव सत्त्वात् सृष्ट्यभावप्रसङ्ग इत्यर्थः ॥ १४ ॥

इत्थं परमाणूनां कारणत्वं निराकृत्य निरवयवत्वं निराकर्तुमाह—

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

वैशेषिकमते जगत्कारणपरमाणूनां रूपादिमत्त्वान्निरवयवत्वाणुत्वनित्यत्वविपर्ययः सावयवत्वादिः प्रसज्येत, लोके रूपादिमतः पटादेस्तथा दर्शनादित्यर्थः ॥

किञ्च—

उभयथा च दोषात् ॥ १६ ॥

वैशेषिकमते परमाणवः किमुपचितानुपचितगुणात्मकाः कल्प्यन्ते न वा । आद्येऽणुत्वव्याघातः, उपचितानुपचितगुणात्मकपृथिव्यादेः स्वरूपोपचयदर्शनात् । द्वितीये तत्कार्यपृथिव्यादिषु रूपाद्यनुपलम्भप्रसङ्ग इत्युभयथापि दोषादनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

अपि च—

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

परमाणुकारणवादस्य केनचिदप्यंशेन कैश्चिदपि शिष्टैरपरिग्रहात् तत्रात्यन्तमनपेक्षा श्रेयोर्थिभिः कर्तव्या । अतो वैशेषिकराद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥ १७ ॥

* ४ समुदायाधिकरणम् *

एवमर्धवैनाशिकवैशेषिकमतनिराकरणानन्तर पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियत इत्यवान्तरसङ्गत्येदमाह—

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

फलं पूर्ववत् । चत्वारः खलु बुद्धमुनेर्विनेया वैभाषिकसौत्रान्तिकविज्ञानवादिसर्वशून्यवाद्याख्याः । तत्रादौ वैभाषिकसौत्रान्तिकयोर्बाह्यास्तित्वाविशेषात् तन्मतमेकीकृत्य तत् किं प्रमाणमूलं भ्रान्तिमूलं वेति सन्देहे पृथिव्यादिचत्वारि भूतानि भौतिकानि विषयेन्द्रियाणि च परमाणुपुञ्जस्वरूपाणि, तत्र बाह्यः पृथिव्यादिसमुदायः परमाणुहेतुक एव, आध्यात्मिको रूपादिसमुदायो रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणपञ्चस्कन्धहेतुक इति तन्मत प्रामाणिकमिति पूर्वः पक्षः । सिद्धान्तस्तु उभयहेतुकेऽपि समुदाये परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुक आध्यात्मिकसमुदाये च तदप्राप्तिः तस्य समुदायस्याप्राप्तिः अचेतनानां परमाणूनां स्कन्धानां च स्वतः समुदायायोगाद्, अन्यस्य च स्थिरस्य चेतनस्य समुदायकर्त्तुरनभ्युपगमात् । अतस्तन्मतं भ्रान्तिमूलमिति सिद्धम् ॥ १८ ॥

ननु संहन्तुश्चेतनस्याभावेऽपि सङ्घात उपपद्यत इत्याशङ्क्य परिहरति—

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

अविद्या संस्कारो विज्ञानमित्येवञ्जातीयकानामविद्यादीनामितरेतरप्रत्ययत्वादितरेतरकारणत्वाद् घटीयन्त्रवदनिशमावर्तमानेष्वविद्यादिष्वर्थादाक्षिप्तसङ्घात उपपद्यत इति चेन्न । उत्पत्तिमात्रनिमित्तत्वाद् अविद्यादीनामितरेतरकारणत्वेऽप्युत्पत्तिमात्रे निमित्तत्वात् तवाभिमतो हेत्वधीनः कारणसमुदायाधीनश्च कार्योत्पादो न सम्भवति संहन्तुः स्थिरस्य चेतनस्यानङ्गीकारादित्यर्थः ॥ १९ ॥

सर्वक्षणिकत्ववादिनां हेत्वधीनोऽपि कार्योत्पादो न सम्भवतीत्याह—

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

कार्यकाले विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते न तु नष्टस्य । भवन्मते तूत्तरस्य कार्यक्षणस्योत्पादे पूर्वकारणक्षणस्य निरोधाद्विनाशाङ्गीकारादित्यर्थः ॥ २० ॥

ननु निर्हेतुक एव कार्योत्पादोऽस्तु । तथा च नोक्तदोष इत्याशङ्क्याह—

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असति हेतौ कार्योत्पत्त्यङ्गीकारे पूर्वज्ञानचक्षुरालोकविषयेपु चतुर्षु हेतुषु सत्सु कार्यं नीलादिविज्ञानं जायत इत्यस्याः प्रतिज्ञाया उपरोधः स्याद् अन्यथा काय सहेतुकमित्यङ्गीकृत्य कार्यपर्यन्त हेतोः स्थित्यङ्गीकारे हेतुफलयोर्यौगपद्यमेकस्मिन् काले स्थितिः स्यादित्यर्थः । एवञ्च क्षणिकत्वप्रतिज्ञाहानिरिति भाव इति ॥

समुदायस्य कारणत्वं क्षणिकत्व चासिद्धमित्यभिधायाधुनाभ्युपगमान्तरं प्रत्याह—

## प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

वैनाशिकाः खलु भावानां बुद्धिपूर्वकनाशोऽबुद्धिपूर्वकनाश आकाशं चेति त्रितयमप्यवस्तु निरुपाख्यमित्याचक्षते । तत्राकाशं परस्तात् प्रत्याख्यास्यति । नाशद्वयमधुना प्रत्याचष्टे । प्रतिसंख्याप्रतिसङ्ख्यानिरोधौ बुद्धिपूर्वकाबुद्धिपूर्वकनाशौ । तयोः सन्तानसन्तानिष्वप्राप्तिरसम्भवः, कुतः, अविच्छेदात् न तावन्निरोधद्वयस्य सन्तानगोचरत्वं सन्तानस्याविच्छेदात् । नापि सन्तानिप्रतियोगिकत्वं सन्तानिनां घटादीनां क्षणिकत्वेन बुद्धिपूर्वकनाशायोगात् । नाप्यबुद्धिपूर्वकसमूलनाशस्त्वदभ्युपगतः सम्भवति मूलस्य मृदादेः प्रत्यभिज्ञायमानत्वात् । तस्मान्निरोधद्वयस्यानुपपत्तिरित्यर्थः ॥ २२ ॥

प्रतिसंख्यानिरोधान्तर्भूतमविद्यानिरोधं निरस्यति—

## उभयथा च दोषात् ॥ २३ ॥

क्षणिकेषु स्थिरत्वादिभ्रान्तिरविद्या । तस्याः किं सम्यग्ज्ञानान्नाशः स्वतो वा । नाद्यः निर्हेतुकनाशाभ्युगमहानिप्रसङ्गात् । द्वितीये सम्यग्ज्ञानोपदेशानर्थक्यमित्युभयथापि दोषादसङ्गतं सौगतमतमित्यर्थः ॥ २३ ॥

इत्थं निरोधद्वयस्य निरुपाख्यत्व निरस्याकाशस्य तन्निरस्यति—

## आकाशे चाविशेषात् ॥ २४ ॥

'आत्मन आकाशः सम्भूत' (तै. २. १) इति श्रुत्या शब्दगुणत्वेन चाकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषान्न निरुपाख्यत्वमित्यर्थः ॥ २४ ॥

अधुनात्मनः क्षणिकत्व निराचष्टे—

## अनुस्मृतेश्च ॥ २५ ॥

अनुभवमनूत्पद्यमाना स्मृतिरनुस्मृतिः । तद्बलादात्मनोऽनुभवितुर्न क्षणिकत्वमित्यर्थः । अन्यानुभूते विषयेऽन्यस्मरणायोगादिति भावः ॥ २५ ॥

कारणाभावात् कार्योत्पत्तिरिति पक्षमवशिष्टं निराचष्टे—

## नासतोऽदृष्टत्वात् ॥ २६ ॥

असतोऽभावात् कार्योत्पत्तिर्न युक्ता, कुतः, अदृष्टत्वाद् निरुपाख्यान्नरविषाणादेः कार्योत्पत्तेरदृष्टत्वात् । दृष्टत्वादिति वा छेदः । सत एव मृदादेः कार्योत्पत्तेर्दृष्टत्वादित्यर्थः ॥ २६ ॥

अधुना प्रवृत्तिमात्रमपि न युक्तमित्याह—

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

अभावाद् भावोत्पत्त्यङ्गीकार उदासीनानां तत्तत्कार्यसाधनेष्वप्रवर्तमानानामपि पुसां स्वस्वाभिमतकार्यसिद्धिः स्याद् । अतो वैभाषिकसौत्रान्तिकयोर्मतं भ्रान्तिमूलमेवेति सिद्धम् ॥ २७ ॥

५ उपलब्ध्यधिकरणम् ।

पूर्वं क्षणिकबाह्यार्थवादिनिराकरणमकारि । तदुपजीव्य क्षणिकविज्ञानमात्रवादी प्रत्यवतिष्ठत इत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

## नाभाव उपलब्धेः ॥ २८ ॥

फलं पूर्ववत् । विज्ञानातिरिक्तबाह्यपदार्थस्याभाव इति विज्ञानवादिनः सिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति सन्देहे प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु विज्ञानव्यतिरिक्तानामभावो न सम्भवति, कुतः, उपलब्धेः, विज्ञानव्यतिरिक्तानामर्थानां घटः पट इत्याद्यनुभवसिद्धत्वादित्यर्थः ॥ २८ ॥

ननु जाग्रद्दशायामुत्पन्नाः सर्वे प्रत्यया निरालम्बनाः प्रत्ययत्वात् स्वप्नगन्धर्वनगरादिप्रत्ययवदित्याशङ्क्य बाधितविषयत्वमुपाधिरित्याह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वप्नादिप्रत्ययस्य जाग्रत्प्रत्ययस्य चान्योन्यं बाधितविषयत्वरूपवैधर्म्यान्न स्वप्नादिदृष्टान्तेन निरालम्बनत्वं जाग्रत्प्रत्ययस्येत्यर्थः । चशब्देन दृष्टान्ते साध्यवैकल्यं सूचित, स्वप्ने प्रातिभासिकविषयाणां सत्त्वादिति । बाह्यार्थानामभावे घटज्ञानं पटज्ञानमिति ज्ञानवैचित्र्यं न स्यादिति सूत्रद्वयस्य तात्पर्यम् ॥ २९ ॥

**नन्वर्थानामभावेऽपि** वासनाभिस्तद्वैचित्र्यं स्यादित्यत आह—

## न भावोऽनुपलब्धेः ॥ ३० ॥

वासनानां न भावो न सद्भावः । कस्मात्, अनुपलब्धेः त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः । बाह्यार्थानुभवस्य वासनां प्रति कारणत्वात् कारणाभावे कार्याभावः । किञ्च त्वत्पक्षे वासनानां संस्काराभिधानानामाश्रयासम्भवादनुपपत्तिरिति भावः ॥ ३० ॥

**नन्वहमि**त्यालयप्रत्यय एवाश्रय इत्यत आह—

## क्षणिकत्वाच्च ॥ ३१ ॥

आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वमित्यर्थः ॥ ३१ ॥

**अधिकरणद्वयार्थ**मुपसंहरति—

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

'पश्यनातिष्ठनै'त्याद्यपशब्दप्रयोगाद् ग्रन्थतोऽनुपपन्नमिदं मतमुक्तक्रमेणार्थतोऽनुपपन्नमेवेति सर्वथानुपपत्तेर्नादरणीय श्रेयोर्थिभिर्भ्रान्तिमूलं सौगतमतमिति सिद्धम् । सर्वशून्यवादिनिरासपरत्वेनाप्येतानि 'नाभाव उपलब्धेः' (२-२-२८) इत्यादिसूत्राणि योजयितव्यानि ॥ ३२ ॥

६ एकस्मिन्नसम्भवाधिकरणम् ।

**एवं** मुक्तकच्छानां बौद्धानां मते निरस्ते मुक्ताम्बराणां मतं बुद्धिस्थम् । एवं च बुद्धिसन्निधिलक्षणसङ्गत्येदमाह—

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥

फलं पूर्ववत् । दिगम्बरमतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्देहे स्यादस्ति, स्यान्नास्तीत्यादिसप्तभङ्गीनयादस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय सर्वेषु पदार्थेषु योजयन्तो दिगम्बराः पदार्थमात्रस्यानेकरूपत्वमाचक्षत इति तन्मतं प्रमाणमूलमिति पूर्वः पक्षः । सिद्धान्तस्तु नैकस्मिन्नसम्भवाद्, एकस्मिन् परमार्थरूपे वस्तुनि विरुद्धधर्माणामसम्भवाद् वस्तुनोऽनेकरूपत्व नास्तीत्यर्थः । यदस्ति तदस्त्येव न नास्ति । यन्नित्यं तन्नित्यमेव नानित्यं यथा प्रत्यगात्मा वस्तुभूतः । एवं प्रपञ्चस्यापि त्वन्मते वस्तुभूतत्वान्नानेकरूपत्वसम्भवः । अस्मन्मते तु प्रपञ्चो न सन्नासन्

किन्त्वनिर्वचनीय एवेति सर्वव्यवहारसम्भवः ॥ ३३ ॥

**दिगम्बराणां** देहपरिणाम एवात्मेति यन्मतं तद् दूषयति—

**एवञ्चात्माकार्त्स्न्यम् ॥ ३४ ॥**

यथैकत्र विरुद्धधर्मासम्भवो दोषः स्याद्वादे प्रसक्तः, एवमात्मनो जीवस्याकार्त्स्न्यं परिच्छिन्नत्वमपरो दोषः स्यादित्यर्थः । तथा च परिच्छिन्नत्वादात्मनो घटादिवदनित्यत्वं स्यात् । देहपरिमाणत्वे मनुष्यात्मनः कर्मवशाद् गजशरीरे कृत्स्ने कृत्स्नस्यात्मनः पुत्तिकाशरीरे वा प्रवेशो न स्यादिति भावः ॥ ३४ ॥

**नन्वात्मन** सावयवत्वाङ्गीकारात् क्रमेण प्रवेशोऽस्त्वित्याशङ्क्याह—

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

पर्यायेणाप्यवयवगमनागमनाभ्यां तत्तत्स्थूलसूक्ष्मशरीरपरिमाणत्वस्यात्मन्यविरोध इति न च । कुतः, विकारादिभ्यः, आत्मनः सावयवत्वेन तत्तच्छरीरप्राप्त्या वृद्धिह्रासाङ्गीकारे विकारित्वप्रसक्त्यानित्यत्वे बन्धमोक्षाभ्युपगमो बाध्येतेत्यर्थः ॥ ३५ ॥

**किञ्च**—

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वेनावस्थितेस्तत्पूर्वयोरुभयोरप्याद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गात् त्रयाणामाद्यमध्यमान्त्यपरिमाणानामविशेषः साम्यं स्याद् । अतः सौगतमतवदार्हतमतमप्यप्रामाणिकमिति सिद्धम् ॥ ३६ ॥

: ७ पाशुपताधिकरणम् :

**पूर्वं** सत्त्वासत्त्वयोरेकत्र विरोधादसम्भव इत्युक्तम् । तर्हि तद्वदुपादानत्वकर्तृत्वयोरेकत्र विरोधादसम्भव इति दृष्टान्तसङ्गत्येदमाह—

**पत्युरसामञ्जस्यात् ॥ ३७ ॥**

फलं पूर्ववत् । केवलमधिष्ठातेश्वरो जगतो नोपादानमिति माहेश्वरराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति सन्देहे प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु पत्युरीश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगन्निमित्तत्वमात्रं न सम्भवति, कुतः, असामञ्जस्यात् । ईश्वरस्य जगत्सर्जने प्रवृत्तौ रागा-

दिदोषप्रसङ्गादसामञ्जस्यं स्यात् प्रवृत्ते रागादिपूर्वकत्वेन लोके दृष्टत्वाद् दृष्टानुसारित्वात् कल्पनायाः । अस्माकन्तु श्रुत्यनुसारित्वादनिर्वचनीयवादित्वाच्च न दोष इति भावः ॥३७ ॥

अपि च–

**सम्बन्धानुपपत्तेश्च ॥ ३८ ॥**

प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य सम्बन्धो वाच्यः असम्बद्धस्य प्रेरकत्वायोगात् । न च सम्बन्धः सम्भवति, निरवयवत्वाद् युतसिद्धत्वाच्च संयोगसमवाययोरनुपपत्तेरित्यर्थः । सिद्धान्ते त्वविद्याप्रेरकत्वं कल्पिततादात्म्येनोपपद्यत इति भावः ॥ ३८ ॥

किञ्च–

**अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥**

लोके कुलालस्य मृदादिप्रेरकत्वं दृष्टम् । न हीश्वरस्य प्रधानादिप्रेरकत्वं सम्भवति, प्रधानस्य रूपादिहीनत्वेन तद्विषयकाधिष्ठानस्य प्रेरणाया अनुपपत्तेरित्यर्थः । सिद्धान्ते तु न दृष्टापेक्षा श्रुत्येकशरणत्वादिति भावः ॥ ३९ ॥

एतद्विधान्तरेणाक्षिप्य परिहरति—

**करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥**

करणानीन्द्रियाण्यप्रत्यक्षाण्यपि यथा जीवेन प्रेर्यन्त एवं प्रधानमप्रत्यक्षमपीश्वरेण प्रेर्यत इति चेन्न, कुत, भोगादिभ्यो दोषेभ्यो जीवस्य भोगार्थमिन्द्रियप्रेरकत्ववदीश्वरस्य प्रेरकत्वे तद्भोगादयः प्रसज्येरन्नित्यर्थः ॥ ४० ॥

किञ्च–

**अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥**

प्रधानजीवेश्वराणां या सङ्ख्या यच्च परिमाण तदुभयमीश्वरेण परिच्छिद्यते वा न वा । आद्ये परिच्छिन्नसङ्ख्यापरिमाणवत्त्वात् त्रयाणां घटवदन्तवत्त्व विनाशित्वं स्यात् । द्वितीय ईश्वरस्यासर्वज्ञत्वं स्याद् । अतो माहेश्वरराद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥ ४१ ॥

* ८ पाञ्चरात्राधिकरणम् *

एवं केवलाधिष्ठातैवेश्वर इति वेदासङ्गतमते निरस्ते निमित्तं प्रकृतिश्चे-

श्वर इति भागवतमतस्य वेदसङ्गतत्वाज्जीवोत्पत्त्यंशे प्रमाणमूलत्वं स्यादिति प्रत्यु-दाहरणसङ्गत्येदमाह—

उत्पत्त्यसम्भवात् ॥ ४२ ॥

फलं पूर्ववत् । वासुदेवः खलु परमात्मा जगदुपादानं निमित्तं च । तस्मात् सङ्कर्षणाख्यो जीव उदेति । तस्मात् प्रद्युम्नाख्यं मनो जायते । तस्मादनिरुद्धाख्योऽहङ्कारो जायत इति भागवतराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति सन्देहे प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु भवतु वेदाविरुद्धांशे प्रमाणमूलत्वं न तद्वेदविरुद्धजीवोत्पत्त्यंशे, कुतः, वासुदेवाज्जीवस्योत्पत्तेरसम्भवात् । यद्युत्पत्तिरङ्गीक्रियेत तर्हि घटवदनित्यत्वापत्त्या भगवत्प्राप्तिरूपो मोक्षस्त्वदभ्युपगतः कस्य स्यात् । अतो भ्रान्तिमूलो भागवतसिद्धान्तः ॥ ४२ ॥

इत्थं जीवजन्म निरस्य ततो मनोजन्म निरस्यति—

न च कर्त्तुः करणम् ॥ ४३ ॥

कर्त्तुर्देवदत्तादेः सकाशात् करणस्य कुठारादेरुत्पत्त्यदर्शनाज्जीवात् कर्त्तुः करणं मनो जन्यत इत्येतन्न सङ्गतमित्यर्थः ॥ ४३ ॥

ननु वासुदेवान्न सङ्कर्षणस्य जन्म न सङ्कर्षणात् प्रद्युम्नस्य न प्रद्युम्नादनिरुद्धस्येत्यत्रे(ष्ट?) (ष्टि)माशङ्क्याह—

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

सङ्कर्षणादीना त्रयाणां वासुदेववद्विज्ञानादिभावे वा विज्ञानैश्वर्यबलवन्निर्दोषनिरवद्यस्वरूपत्वेऽपि तदप्रतिषेधस्तस्योत्पत्त्यसम्भवरूपदोषस्य प्रकारान्तरेणाप्रतिषेध इत्यर्थः । किं वासुदेवादयश्चत्वारोऽपीश्वरा उत सङ्कर्षणादयस्त्रयो वासुदेवतुल्याः । आद्ये भगवानेक एव वासुदेव इति स्वसिद्धान्तहानिः । द्वितीय उत्पत्त्यसम्भवदोषस्तदवस्थ एवेति भावः ॥ ४४ ॥

अपि च—

विप्रतिषेधाच्च ॥ ४५ ॥

क्वचिज्ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि वासुदेवस्य गुणा इति क्वचिच्चोक्तगुणा एव वासुदेवा इति गुणगुणिनोर्भेदमभेद च वर्णयन्ति । तथा च परस्परं विप्रतिषेधादप्रामाणिकमिद भागवतमतमित्यर्थः । तस्मादेवं साङ्ख्यवैशेषिकसौग-

तार्हतमाहेश्वरभागवतमताना भ्रान्तिमूलत्वेन न तैर्मतैर्निरवद्याद् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विरुध्यत इति सिद्धम् ॥ ४९ ॥

यत्साक्षात्कृतये सर्ववेदान्तानां समन्वये ।
परास्तः परराद्धान्तविरोधस्तदहं परम् ॥

अस्मिन् पादे सूत्राणि पञ्चचत्वारिंशत् । अष्टावधिकरणानि ।

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

द्वितीयाध्यायस्य द्वितीय पाद॰ ।

---

## अथ तृतीयः पादः ।

* १ वियदधिकरणम् *

**पूर्वस्मिन्** पादे श्रुतिविरुद्धत्वात् परपक्षाणामनपेक्षत्वमभाणि । तर्हि श्रुतीनामन्योन्यविरुद्धत्वाद्ब्रह्मकारणवादस्याप्यनपेक्षत्वं स्यादिति शङ्कानिरासार्थं पर पादद्वयमारभ्यते । एवञ्च पूर्वपादेनास्य पादद्वयस्य दृष्टान्तसङ्गतिः शङ्काव्याजेन दर्शिता । पादान्तरत्वात् पूर्वाधिकरणेनास्याधिकरणस्य न सङ्गत्यपेक्षा ।

### न वियदश्रुतेः ॥ १ ॥

अत्र पूर्वपक्षे श्रुतीनां मिथो विरोधादप्रामाण्यं, सिद्धान्ते विरोधाभावात् प्रामाण्यमिति फलभेदः । एव सर्वेषु चाधिकरणेषु पादद्वयगतेषु पूर्वोत्तरपक्षयोः फलं द्रष्टव्यम् । अत्रादौ सृष्टिवाक्यानामविरोध प्रतिपादयितुमाकाशमाश्रित्य विचार्यते । किमाकाशस्योत्पत्तिरस्ति उत नेति सन्देहे यद्यस्ति तर्हि च्छान्दोग्य आकाशवायू विना 'तत् तेजोऽसृजत' (६-२-३) इति तेजआदिका सृष्टिः श्रूयते । तैत्तिरीयके (२-१) तु 'आत्मन आकाशः सम्भूत' इत्याकाशादिका । तथा चानयोर्वाक्ययोर्विरोध इति पूर्व. पक्षः । सिद्धान्तस्त्वेकदेशिमतेन न वियदाकाश उत्पद्यते, कस्माद्, अश्रुतेः आकाशस्योत्पत्तिप्रतिपादकवाक्यस्याश्रवणात् ॥ १ ॥

**यद्यपि** 'आत्मन आकाशः सम्भूत' इति श्रुतिरस्ति, तथापि सा गौणीति गूढोऽभिसन्धिः । ततश्चाकाशस्योत्पत्तेरनभ्युपगमादेव न विरोध इति गूढाभिसन्धिमजानानः शङ्कते—

### अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे। छान्दोग्य आकाशोत्पत्तिश्रुत्यभावेऽपि सा श्रुतिस्तैत्तिरीयकेऽस्तीत्यर्थः। तथा च विरोधस्तदवस्थ इति शङ्कितुराशयः ॥ २ ॥

**एकदेशी** स्वाभिप्रायं प्रकटयति—

**गौण्यसम्भवात् ॥ ३ ॥**

नह्याकाशस्योत्पत्तिश्रुतिर्मुख्या किन्तु गौणी, कुतः, असम्भवात्। आकाशोत्पत्तौ समवायिकारणादिसामग्र्यभावाद्विभुत्वेन नित्यत्वानुमानाच्चाकाशोत्पत्तेरसम्भवादित्यर्थः ॥ ३ ॥

**किञ्च—**

**शब्दाच्च ॥ ४ ॥**

'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ. २-३-३) इत्याकाशेऽमृतशब्ददर्शनान्नाकाशस्योत्पत्तिरित्यर्थः ॥ ४ ॥

नन्वेकस्मिन् वाक्य एकस्य सम्भूतशब्दस्य गौणत्वं मुख्यत्व च विरुद्धमित्यत आह—

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥**

यथैकस्मिन्नेव प्रकरणे विषयभेदाद् 'अन्नं ब्रह्म' (तै. ३-२) इत्यत्र ब्रह्मशब्दो गौणः 'आनन्दो ब्रह्म' (तै. ३-६) इत्यत्र मुख्यः तथा प्रकृतेऽपि विषयभेदादेकस्य गौणत्वं मुख्यत्वं च स्यादित्यर्थः ॥ ५ ॥

इदमेकदेशिमतं दूषयन् सिद्धान्तयति—

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

औपनिषदाद् ब्रह्मणः सर्वस्य वस्तुजातस्याव्यतिरेकादेकविज्ञानात् सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति। यद्याकाशस्योत्पत्तिर्न स्यात् तर्हि सा प्रतिज्ञा हीयेत। अतस्तत्सिद्धय आकाशस्योत्पत्तिरङ्गीकर्तव्या। किञ्च शब्देभ्यः 'सदेव सोम्येदमग्र आसीत्' (छा. ६-२-१) 'ऐतदात्म्यमिदं सर्वम्' (छा. ६-८-७) इत्यादिशब्देभ्यः कार्यकारणाभेदपरेभ्यः प्रतिज्ञासिद्धिरवगम्यते। न चैवमाकाशस्योत्पत्तौ पूर्वोक्तविरोधस्तदवस्थ एवेति वाच्यम्। छान्दोग्यश्रुतिस्तैत्तिरीयश्रुत्यनुसारेणाकाशं वायुं च सृष्ट्वा 'तत् तेजोऽसृजत' (६-२-३) इति विपरिणम्यत इति नानयोर्वाक्ययोर्विरोध

इति । यत्तु सामग्र्यभावादिति तन्न । श्रौतस्य ब्रह्मण एव वियत्सामग्रीत्वात् ॥ ६ ॥

यच्च नित्यत्वानुमानाच्चेति, तच्चानुमानेनैव दूषयति—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तुशब्द आकाशोत्पत्त्यसम्भवशङ्काव्यावृत्त्यर्थः । यतो यावद्विकारजातं विभागो दृश्यते न त्वविकारे ब्रह्मणि लोके घटादेर्विकारस्यैव विभक्तत्वदर्शनात् । तथा चायं प्रयोगः— आकाशादिः पराधीनसत्ताकः स्वसमानसत्ताकविभागवत्त्वाद् घटवदिति । ततश्च परोक्तविभुत्वहेतोरसिद्धिर्द्रष्टव्या । अमृतशब्दप्रयोगस्त्वापेक्षिकः । अत आकाशस्य ब्रह्मकार्यत्वं सिद्धम् ॥ ७ ॥

* २ मातरिश्वाधिकरणम् *

उक्तन्यायमन्यत्रातिदिशति—

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अतिदेशत्वान्न पृथक् सङ्गत्यपेक्षा । अत्र वायोरुत्पत्तिरस्ति न वेति सन्देहे छान्दोग्ये वायोरुत्पत्तिर्न श्रूयते, तैत्तिरीयके च श्रूयते । तथा च पूर्ववद् द्वयोर्वाक्ययोर्विरोधपासौ तत्परिहारायोत्पत्तिर्गौणी वाच्या 'सैषानस्तमिता देवता यद्वायुः' (बृ. १-५-२२) इति लयप्रतिषेधाच्च न वायोरुत्पत्तिरिति पूर्वः पक्षः । सिद्धान्तस्तु एतेनाकाशस्योत्पत्तिमत्त्वव्याख्यानेन वायुरप्याकाशावच्छिन्नब्रह्मजन्यत्वेन व्याख्यातः । लयप्रतिषेधस्त्वापेक्षिकः, अन्यथा प्रतिज्ञाहान्यादेः समानत्वादिति भावः ॥ ८ ॥

* ३ असम्भवाधिकरणम् *

पूर्वमसम्भावितोत्पत्तिकयोरपि वियत्पवनयोरुत्पत्तिरस्तीति श्रुतिबलादुक्तम् । तद्वद् ब्रह्मान्तराद् ब्रह्मोत्पत्तिः श्रुतिबलादस्त्विति दृष्टान्तसङ्गत्येदमाह—

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

अत्र 'न चास्य कश्चिज्जनिता' (श्वे. ६. ९) इत्यादिकानां ब्रह्मणो नित्यत्वप्रतिपादिकानां श्रुतीनां 'त्वं जातो भवसि विश्वतोमुख' (श्वे. ४. ३.) इति श्रुत्या विरोधोऽस्ति न वेति सन्देहे विरोध इति पूर्वः पक्षः । सिद्धान्तस्तु सतः सदात्मकस्य ब्रह्मण उत्पत्त्यसम्भवः, कुतः, अनुपपत्तेः सत्सामान्यात् सत्सामान्यस्योत्पत्त्यनुपपत्तेः । विशेषस्यैव हि घटादेर्मृत्सामान्यजन्यत्वदर्शनात् । जन्मश्रुतिश्चौपाधिकविषया । अतो नित्यं ब्रह्मेत्यविरोधः ॥ ९ ॥

( ४ तेजोऽधिकरणम् )

**पूर्वत्र** सामान्यात् सामान्यस्योत्पत्तिर्मा भूत् । इह सामान्याद् ब्रह्मणो विशेषस्य तेजस उत्पत्तिरस्त्विति प्रत्युदाहरणसङ्गत्येदमाह—

## तेजोऽतस्तथा ह्याह ॥ १० ॥

'वायोरग्निः' (तै. २. १. १) इति तेजसो वायुजन्यत्वप्रतिपादकतैत्तिरीयकश्रुतेः 'तत् तेजोऽसृजत' (छा. ६. २. ३.) इति तेजसो ब्रह्मजन्यत्वप्रतिपादकच्छान्दोग्यश्रुत्या विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति पूर्वः पक्षः । वायोरपि ब्रह्मकार्यत्वेन तेजः प्रत्युपादानत्वासम्भवाद् ब्रह्ममात्रजन्यत्वं तेजस इत्यविरोध इत्येकदेशिसिद्धान्तः । परमसिद्धान्तस्तु तेजोऽतोऽस्माद्वायोर्जायते । हि यतस्तथा वायुजन्यत्वं 'वायोरग्निः' इति श्रुतिराह । नच तर्ह्येतस्यच्छान्दोग्यश्रुत्या विरोधस्तदवस्थ इति वाच्यं, वायोर्ब्रह्मजन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्यच्छान्दोग्यश्रुत्यर्थस्यैव 'वायोरग्निरि'ति श्रुतेरप्यर्थत्वेनैकार्थ्यादविरोध इति ॥ १० ॥

( ५ अबधिकरणम् )

**पूर्वं** तेजसो वायुजन्यत्वं कथितम् । अथाप्पृथिव्योः क्रमेण बुद्धिस्थत्वाद् बुद्धिसन्निधिलक्षणसङ्गत्या तावदधिकरणद्वयमाह—

## आपः ॥ ११ ॥

अतस्तथा ह्याहेत्यनुवर्तते 'अग्नेरापः' (तै. २-१-१) इति श्रुतेः 'तदपोऽसृजत' (छा. ६. २. ३) इत्यपां ब्रह्मजन्यत्वश्रुत्या विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति पूर्वः पक्षः । अपामग्निदाह्यत्वान्न तज्जन्यत्वमित्यविरोध इत्येकदेशिसिद्धान्तः । परमसिद्धान्तस्त्वापोऽतस्तेजसो जायन्ते, हि यस्मात् तथा तेजोजन्यत्वम् 'अग्नेराप' इति श्रुतिराह । नहि त्रिवृत्कृतयोरिवात्रिवृत्कृयोस्तेजसोर्दाह्यदाहकभावः सम्भवति विरोधाभावात् । अतः पूर्ववत् तेजोभावापन्नब्रह्मजन्यत्वेनानयोरैकार्थ्यान्न विरोध इति ॥ ११ ॥

( ६ पृथिव्यधिकाराधिकरणम् )

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'अद्भ्यः पृथिवी' (तै. २. १. १) इति पृथिव्या अब्जन्यत्वश्रुतेः 'ता अन्नमसृजन्त' (छा. ६. २. ४) इत्यन्नस्याब्जन्यत्वश्रुत्या विरोधोऽस्ति न वेति स-

न्देहेऽन्नशब्दस्यौदनादौ प्रसिद्धत्वेन पृथिवीवाचकत्वाभावाद्विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु पृथिव्येवात्रान्नशब्देनोच्यते नौदनादि, कुतः, अधिकाररूपशब्दान्तरेभ्यः 'तत् तेजोऽसृजत' (छा. ६. २. ३) इति महाभूतोत्पत्त्यधिकाराद् 'यत् कृष्ण तदन्नस्य' (छा. ६. ४. १) इति पृथिवीत्वज्ञापककृष्णरूपस्य श्रवणाद् 'अद्भ्यः पृथिवी'ति पृथिव्या एव तज्जन्यत्वप्रतिपादकशब्दान्तरस्य सत्वाच्च । अतोऽनयोरैकार्थ्येनैकवाक्यत्वादविरोध इति सिद्धम् ॥ १२ ॥

* ७ तदभिध्यानाधिकरणम् *

इत्थमुत्पत्तिक्रमेण महाभूतश्रुतीनामविरोधः प्रत्यपादि । अधुना तानि भूतान्याश्रित्यान्यद्विचार्यत इत्याश्रयाश्रयिभावसङ्गत्येदमाह—

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

अत्र ब्रह्मणः सर्वसृष्टिकर्तृत्वप्रतिपादकश्रुतेर्भूतानां भौतिकस्रष्टृत्वप्रतिपादकश्रुत्या विरोधोऽस्ति न वेति सन्देहे 'आकाशाद्वायुः' (तै. २-१) इत्यादिना भूतानां स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात् तत्प्रतिपादकश्रुत्या विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु स एव परमेश्वरस्तत्तत्कार्यगोचरेक्षणात्मकाभिध्यानादेवेक्षितभूताधिष्ठाता संस्तत्तत्कार्यं सृजति, कस्मात्, तल्लिङ्गात् तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य 'यः पृथिव्यां तिष्ठन्' (बृ. ३-७-३) इत्यादिना श्रुतत्वात् । अतो भूतानां परमेश्वराधिष्ठितानामेव स्रष्टृत्वप्रतिपादकत्वेनानयोरेकवाक्यत्वा[1]दविरोध इति ॥ १३ ॥

* ८ विपर्ययाधिकरणम् *

इत्थं भूतानामुत्पत्तिक्रमे चिन्तिते लयक्रमो बुद्धिस्थः । सोऽत्र प्रसङ्गाद्विचार्यत इति प्रसङ्गसङ्गत्येदमाह—

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

अस्य प्रासङ्गिकविचारस्याद्वैतब्रह्मध्यानं फलम् । अत्र किं भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रम उत सोपानपरम्परारूढस्य व्युत्क्रमेणावरोहणवद् व्युत्क्रमेणैव लयक्रम इति सन्देहे कल्प्यापेक्षया क्लृप्तस्य लघुत्वाच्छ्रुतोत्पत्तिक्रमेणैवेति पूर्वः पक्षः । सिद्धान्तस्तु अत उत्पत्तिक्रमाद् विपरीतक्रमेणैव लयक्रमः, स्वकारणे कार्याणां लयदर्शनात् । उपपद्यते च व्युत्क्रमेणैव लयक्रमः । इतरथा सति कार्ये कारणस्य नाशः स्यात् । तच्चानिष्टमित्यर्थः ॥ १४ ॥

---

१. 'त्वेनावि' इति खपुस्तके पाठः.

( ९ अन्तराविज्ञानाधिकरणम् )

भूतोत्पत्तिलयक्रमविचारस्य यत् प्रयोजनं तदेव करणोत्पत्तिक्रमविचारस्ये-त्येकप्रयोजनकत्वसङ्गत्येदमाह—

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

पूर्वोक्तक्रमः करणोत्पत्तिक्रमेण विरुध्यते न वेति सन्देहे, विज्ञायतेऽनेनेति विज्ञानशब्देन बुद्धिरिन्द्रियाणि च गृह्यन्ते, संशयात्मकमन्तःकरणं मनः, तानीन्द्रियबुद्धिमनांसि भूतानामात्मनश्चान्तरा अन्तराले तल्लिङ्गात् तस्याः सृष्टेर्गमकाद् 'एतस्माज्जायते प्राण' (मु. २-१-३) इत्यादिवाक्यादनुक्रम्यन्ते। तथा चात्मनः सकाशादिन्द्रियबुद्धिमनांसि तेभ्यश्च भूतानीत्यनेन क्रमेण विरुध्यत इति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु नाविशेषाद् इन्द्रियबुद्धिमनसां भौतिकत्वेन भूतोत्पत्तिक्रमादिन्द्रियाद्युत्पत्तिक्रमस्याविशेषाद्, येन क्रमेण भूतोत्पत्तिस्तेनैव क्रमेण भौतिकोत्पत्तिरित्यतो न विरुध्यत इत्यर्थः। 'एतस्माज्जायते प्राण' इत्यादिश्रुतिश्च सर्वेषामात्मनः सकाशादुत्पत्तिमात्रं ब्रूते न क्रममिति भावः। तस्मान्न केनापि वाक्येन भूतसृष्टिवाक्यानां विरोध इति सिद्धम् ॥ १५ ॥

( १० चराचरव्यपाश्रयाधिकरणम् )

इत्थं पूर्वाधिकरणेषु तत्पदार्थब्रह्मसिद्ध्यै भूतकरणोत्पत्तिश्रुतिविरोधो निरस्तः। सम्प्रत्यापादसमाप्तेस्त्वंपदार्थशुद्ध्यै जीवविषयश्रुतिविरोधो निरस्यते। तत्र यथा पूर्वं करणोत्पत्तिश्रुत्या भूतश्रुतेरविरोध इत्युक्तं न तथेह जीवोत्पत्तिशास्त्रेणाविरोधः तदुत्पत्तौ भूतोत्पत्तिक्रमभङ्गस्यावश्यकत्वादिति प्रत्युदाहरणावान्तरसङ्गत्येदमाह—

## चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

अत्र 'न जीवो म्रियते' (छा. ६-११-३) इति जीवनित्यत्वशास्त्रस्य जीवोत्पत्तिनाशनिमित्तकजातेष्ट्यादिशास्त्रेण विरोधोऽस्ति न वेति सन्देहे देवदत्तो जातो मृतश्चेति लौकिकव्यपदेशानुगृहीतजातकर्मादिशास्त्रेण विरोधोऽस्तीति पूर्वः पक्षः। सिद्धान्तस्तु योऽयं लौकिकस्तद्व्यपदेशस्तयोर्जन्ममरणयोर्व्यपदेशः स चराचरव्यपाश्रयः स्थावरजङ्गमदेहविषयो मुख्यः जीवे तु भाक्तः गौणः स्यात्, कुतः, जन्म-

१. 'त्पत्तिक्र' इति खपुस्तके पाठः.

मरणव्यपदेशस्य तद्भावभावित्वाद् देहोत्पत्तिनाशान्वयव्यतिरेकानुविधायित्वादित्यर्थः । देहप्रादुर्भावाद्यपेक्षयैव जातकर्मादिविधानमिति न तेन शास्त्रेण जीवनित्यत्वशास्त्रस्य विरोध इति भावः ॥ १६ ॥

* ११ आत्माधिकरणम् *

इत्थं देहोत्पत्तिनाशयोः सतोर्जीवस्य जन्मनाशौ मा भूताम् । कल्पाद्यन्तयोर्जीवस्य जन्ममरणे[1] किं न स्यातामिति प्रत्युदाहरणसङ्गत्येदमाह—

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

अत्राविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशवाक्यस्य जीवस्य परस्मादात्मनः 'सर्वे एत आत्मानो व्युच्चरन्ति' इत्युत्पत्तिवादिवाक्येन विरोधोऽस्ति न वेति सन्देहेऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु आत्मा जीवो नोत्पद्यते, कुतः, अश्रुतेः उत्पत्तिप्रकरणेषु जीवोत्पत्तेरश्रुतः, ताभ्यः 'स वा एष महानज आत्मा' (बृ. ४-४-२५) 'अजो नित्य' (कठ. २-१८) इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्चेत्यर्थः । औपाधिकजन्मालम्बनं जीवजनिवाक्यमिति न तेन प्रवेशवाक्यस्य विरोध इति भावः ॥ १७ ॥

* १२ ज्ञाधिकरणम् *

पूर्वसिद्धजीवानुत्पत्तिमुपजीव्योत्तरासिद्धान्तोत्थानाद्धेतुहेतुमद्भावसङ्गत्येदमाह—

## ज्ञोऽत एव ॥ १८ ॥

अत्र 'आत्मैवास्य ज्योतिः' (बृ. ४-३-६) इत्यादिस्वयञ्ज्योतिष्ट्वश्रुतेः 'पश्यंश्चक्षुः' (बृ. १-४-७) इत्यागन्तुकज्ञानवत्त्वश्रुत्या विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु जीवो ज्ञः स्वयञ्ज्योतिःस्वरूपः, कुतः, अत एवानुत्पत्तिमत्त्वादेवेत्यर्थः । 'पश्यंश्चक्षुरि'त्याद्या श्रुतिरागन्तुकवृत्त्यभिप्रायेति न तया स्वयंज्योतिष्ट्वश्रुतेर्विरोध इति भावः ॥ १८ ॥

* १३ उत्क्रान्त्यधिकरणम् *

इत्थं जीवस्य ब्रह्माभेदयोग्यत्वाय नित्यत्व स्वप्रकाशत्वं चाभिधायाधुना स्वप्रकाशत्वादिवद् बहिष्ठमपरिच्छिन्नत्वमणुत्वनिरासेन साधयतीत्यान्तरबहिर्भावसङ्गत्येदमाह —

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

---

१, 'नाशौ' इति खपुस्तके पाठः,

अत्र 'सर्वव्यापी' (श्वे. ६-११) इति सर्वगतत्वश्रुतेः 'एषोऽणुरात्मा' (मु. ३. १. ९) इत्यणुत्वश्रुत्या विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः। कस्माद्, जीवस्य 'अस्माच्छरीरादुत्क्रामति' (कौ ३. ३) 'चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ. १.२) तस्माल्लोकात् पुनरैति' (बृ. ४. ४. ६) इत्युत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीव'। अतोऽस्ति विरोध इत्यर्थः ॥ १९ ॥

अपि च –

**स्वात्मना चोत्तरयोः ॥ २० ॥**

यद्यप्युत्क्रान्तिर्देहस्वाम्यनिवृत्तिरूपा विभुत्वे सम्भवति तथाप्युत्तरयोर्गत्यागत्यो' स्वात्मना जीवात्मना सम्बन्धात् ते आत्मनोऽणुत्वे सम्भवत इत्यर्थः ॥२०॥

तर्हि सर्वगतत्वश्रुतिविरोध इत्याशङ्क्य समाधत्ते —

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१॥**

नाय जीवोऽणुः अतच्छ्रुतेः अनणुत्वश्रुते' 'सर्वव्यापी' (श्वे. ६. ११) इत्यादिना सर्वगतत्वश्रुतेरिति चेन्न, इतराधिकाराद् इतरस्य ब्रह्मणः सर्वेषु वेदान्तेषु प्रधानतया ज्ञेयत्वेन प्रकृतत्वात् तस्यैव सर्वगतत्वश्रुतिर्न जीवस्येत्यर्थ. ॥२१॥

जीवस्य त्वणुत्वश्रुतिरस्तीत्याह —

**स्वशब्दोन्मानाभ्यां च ॥ २२ ॥**

'एषोऽणुरात्मा' (मु. ३. १. ९) इति स्वस्याणुत्वस्य वाचक एतच्छब्दः। 'वालाग्रशतभागस्य' (श्वे. ५. ९) इत्युन्मानमुद्धृत्य सर्वेभ्यः स्थूलपरिमाणेभ्यो मानमुन्मानम् अत्यन्तापकृष्टपरिमाणामिति यावत्। ताभ्या जीवोऽणुरेवेत्यर्थः ॥

नन्वात्मनोऽणुत्वे जाह्नवीतोयनिमग्नस्य देहव्यापिशैत्योपलब्धिविरोध इत्यत आह —

**अविरोधश्चन्दनवत् ॥ २३ ॥**

यथा चन्दनबिन्दुः शरीरैकदेशस्थः शरीरव्यापि सुखं जनयति, तथा जीवोऽपि देहव्यापिन शैत्याद्युपलम्भं करिष्यतीत्यविरोध इत्यर्थः ॥ २३ ॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्य परिहरति —

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि॥ २४ ॥**

नात्र चन्दनदृष्टान्तः अवस्थितिवैशेष्यात् प्रत्यक्षेण चन्दनबिन्दोरेकदेशेऽवस्थितिर्ज्ञायते जीवस्य तु नैवमित्यतुल्यत्वादिति चेन्न, कुतः, अभ्युपगमाज्जीवाणुत्वस्य । तत् कस्माद्, हृदि हि, यस्मादल्पपरिमाणे हृदि जीवः पठ्यते 'हृद्यन्तर्ज्योतिः' (बृ. ४-३-७) इत्यादौ, तस्माज्जीवस्याणुत्वमभ्युपगम्यत इति न दृष्टान्ते वैषम्यमित्यर्थः ॥ २४ ॥

**ननु** सावयवतया चन्दनबिन्दोः सर्वशरीरव्यापित्वम् । न तथा जीवस्याणोः सावयवत्व, येन शरीरव्यापित्व स्यादित्यपरितुष्टा पक्षान्तरमाह —

## गुणाद्वा लोकवत् ॥ २५ ॥

आत्मनोऽणुत्वेऽपि तन्निष्ठज्ञानगुणस्य व्यापकत्वाङ्गीकाराद् व्यापकगुणाद्व्यापि कार्यं भविष्यति लोकवद्, यथा लोके गृहनिष्ठप्रदीपस्याल्पत्वेऽपि प्रभात्मक-(गुण) वशाद् गृहव्यापि प्रकाशादि कार्य सम्भवति, तद्वदित्यर्थः ॥ २५ ॥

**ननु** गुणिव्यतिरेकेण गुणस्य वृत्तेरन्यत्रादर्शनात् तत् कथमित्याशङ्क्याह—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्यापि सतो गन्धस्य गुणिव्यतिरेकेण वृत्तिः पुष्पवाटिकापरिसरे पर्यटतः पुंसो गन्धोपलम्भदर्शनात्, तद्वद् गुणिव्यतिरेको ज्ञानस्येत्यर्थः ॥ २६ ॥

**अधुना** ज्ञानेनैवात्मनो देहव्याप्तिरित्यत्र श्रुतिमाह —

## तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्व चात्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' (छा. ८.८.१) इति श्रुतिर्ज्ञानेन समस्तशरीरव्यापित्वं दर्शयतीत्यर्थः ॥

**तत्रैव** हेत्वन्तरमाह —

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' (कौ. ३.६) इत्यात्मज्ञानयोः कर्तृकरणभावेन पृथगुपदेशाद् गुणद्वारास्य शरीरव्यापित्वं गम्यते । तथा च व्यापकं ज्ञानं जीवस्त्वणुरित्यणुत्वश्रुत्या सर्वगतत्वश्रुतेर्विरोध इति पूर्वः पक्षः ॥ २८ ॥

**सिद्धान्तस्तु** —

## तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नैवाणुर्जीवः सर्वगतस्यैव ब्रह्मणो जीवभावेन प्रवेशश्रवणात् तादात्म्योपदेशाच्च । कथं तर्हि जीवेऽणुत्वव्यपदेशः, तद्गुणसारत्वात् तस्या बुद्धेर्गुणा अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः, ते गुणाः सारं प्रधानं यस्य जीवस्य स तथा, तस्य भावस्तत्त्वं, तस्मात् तद्व्यपदेशोऽणुत्वादिव्यपदेशः न स्वाभाविकः प्राज्ञवद्, यथा प्राज्ञस्य परमात्मनः सगुणोपासनेषु दहराद्युपाधिवशादणुत्वादिकं व्यपदिश्यते तद्वदित्यर्थः ॥ २९ ॥

नन्वात्मन्यणुत्वादिससारस्य बुद्ध्युपाधिकत्वे कदाचित् बुद्ध्या वियोगे संसारो न स्यादित्यत आह –

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥**

बुद्धिसंयोगस्य यावदात्मभावित्वात् सम्यग्दर्शनेन संसारो न निवर्तते तावद्भावित्वान्नोक्तदोषः । तत् कस्मात्, तद्दर्शनाद् देहवियोगेऽपि तस्य बुद्धिसंयोगस्य 'स समानः सन्नुभौ लोकावनुसञ्चरति' (बृ. ४-३-७) इत्यादिश्रुतौ दर्शनादित्यर्थः ॥ ३० ॥

ननु सुषुप्तौ ब्रह्मसम्पत्तिकार्यनाशयोरभ्युपगमान्न बुद्धिसंयोगस्य यावदात्मभावित्वमित्यत आह—

**पुंस्त्वादिवत् ‡तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥**

यथा बाल्ये पुंस्त्वादेः सत एव यौवनेऽभिव्यक्तिस्तद्वत् तस्य बुद्धिसंयोगादेः सुषुप्तौ सूक्ष्मात्मना सत एवाभिव्यक्तिसम्भवाद् यावदात्मभावित्वं न विरुध्यत इत्यर्थः ॥ ३१ ॥

ननु बुद्ध्यपरपर्यायान्तःकरणे किं प्रमाणं, यत्प्रयुक्तः संसारः स्यादित्यत आह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥**

इदमन्तःकरणमवश्यमभ्युपगन्तव्यम् । अन्यथानभ्युपगमे सर्वेषामिन्द्रियाणां स्वस्वविषयसन्निधानदशायां नित्योपलब्धिप्रसङ्गः युगपत् सर्वविषयोपलब्धिप्रसङ्गः मनोव्यतिरिक्तज्ञानसामग्र्याः सत्त्वात् । यदि सत्यामपि सामग्र्यां ज्ञानाभावः, तदा नित्यमनुपलब्धिप्रसङ्गः । कस्याप्युपलब्धिर्न स्यात् । अथैकस्योपलब्धिमि-

‡ 'तस्य' मुद्रिताद्वैतभाष्यादौ पाठ.

तरेषामनुपलब्धिमिच्छता ज्ञानसामग्रीमध्येऽन्यतरस्यात्मन इन्द्रियस्य वा नियमः शक्तिप्रतिबन्धोऽङ्गीकर्तव्यः । स न सम्भवति निर्धर्मे आत्मनि शक्तेरभावात् । नापीन्द्रियस्य शक्तिः आन्तरत्वेन तद्धर्मत्वायोगात् । तस्माद्व्यासङ्गस्थल इच्छैव नियामिका । तस्याश्च मनोधर्मत्वेन तदन्यथानुपपत्त्या 'कामः सङ्कल्प' (बृ. १-५-३) इत्यादिश्रुत्या च सिद्धमन्तःकरण, तत्प्रयुक्तश्चात्मन्यणुत्वादिसंसार इति । तस्मादौपाधिकाणुत्वश्रुत्या न वास्तवसर्वगतत्वश्रुतेर्विरोध इति सिद्धम् ॥ ३२ ॥

* १४ कर्त्रधिकरणम् ।

इत्थमणुत्वं पराणुद्य सर्वगतत्व स्वयञ्ज्योतिष्ट्वादिवद् बहिष्ठं प्रतिष्ठापितम् । अधुना ततो बहिष्ठं कर्तृत्व बुद्धिकर्तृत्वव्यासेधेन साधयतीत्यान्तरबहिर्भावसङ्गत्येदमाह—

## कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

अत्र तद्गुणसारत्वस्यैव प्रपञ्चनादत्र मिथः श्रुत्योर्विरोधपरिहारौ न विचारयितव्यौ, किन्त्वात्मनः कर्तृत्वाकर्तृत्वे । तत्र किं बुद्धिः कर्त्री उत जीवः कर्तेति सन्देहे परिणामित्वाद् बुद्धिरिति पूर्वः पक्षः । सिद्धान्तस्तु आत्मैव कर्ता न बुद्धिः, कुतः, कर्त्तुरपेक्षितोपायबोधकविधिशास्त्रस्यार्थवत्त्वात् । यदि बुद्धिः कर्त्री फलभोक्ता चात्मेत्युच्येत तर्हि तादृशविधिशास्त्रमनर्थकमापद्येत । अतो न केवलबुद्धेः कर्तृत्वम्, अपि त्वात्मन इति ॥ ३३ ॥

**किञ्च—**

## विहारोपदेशात् ॥ ३४ ॥

'स्वे शरीरे यथाकाम परिवर्तते' (बृ. २-१-१८) इति जीवप्रकरणे स्वप्नावस्थायां विहारस्य सञ्चरणस्योपदेशादकर्त्तुः सञ्चरणायोगादात्मनः कर्तृत्वमित्यर्थः ॥ ३४ ॥

**किञ्च—**

## उपादानात् ॥ ३५ ॥

'प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. २-१-१७) इत्यात्मनो ग्रहणशक्त्युपादानश्रवणादकर्त्तुरुपादानायोगादात्मनः कर्तृत्वमित्यर्थः ॥ ३५ ॥

**अपि च—**

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

'विज्ञानं यज्ञ तनुते' (तै. २-५) इत्यादौ लौकिकवैदिकक्रियायां विज्ञानशब्दवाच्यस्यात्मन. कर्तृत्वव्यपदेशाद् यदि विज्ञानशब्दो बुद्धिपरो जीवपरो न चेत्, तर्हि निर्देशविपर्ययः स्याद् बुद्धेः करणत्वेन विज्ञानमिति कर्तृत्वनिर्देशस्य विज्ञानेनेति करणत्वविपर्ययः स्यादित्यर्थः ॥ ३६ ॥

ननु स्वतन्त्रस्यात्मनः कर्तृत्वेऽनिष्टं न कुर्याद् इष्टमेव कुर्यादित्यत आह—

**उपलब्धिवदनियमः ॥ ३७ ॥**

यद्वदुपलब्धौ स्वतन्त्रोऽप्यात्मेष्टमनिष्टं चोपलभते, तद्वदिष्टमनिष्टं च सम्पादयतीत्यनियम इत्यर्थः ॥ ३७ ॥

इतश्चात्मन एव कर्तृत्व न बुद्धेरित्याह—

**शक्तिविपर्ययात् ॥ ३८ ॥**

बुद्धेः कर्तृत्वे करणशक्तिविपर्ययात्, करणशक्तिर्हीयेतेति यावत् ॥ ३८ ॥
ज्ञानसाधनविध्यन्यथानुपपत्त्याप्यात्मन. कर्तृत्व स्वीकार्यमित्याह—

**समाध्यभावाच्च ॥ ३९ ॥**

आत्मनोऽकर्तृत्वे 'आत्मा वा अरे द्रष्टव्य' (बृ. २ ४-५) इत्यादौ विहितस्य ब्रह्मसाक्षात्कारसाधनस्य समाधेरभावप्रसङ्गादात्मनः कर्तृत्वसिद्धिः ॥ ३९ ॥

* १५ तक्षाधिकरणम् *

इत्थं सर्वगतत्वाद् बहिष्ठं कर्तृत्वं प्रतिष्ठापितम् । अधुना तदध्यस्तमात्मनीति प्रतिपादयतीत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

**यथा च तक्षोभयथा ॥ ४० ॥**

अत्र 'असङ्गो ह्ययं पुरुष' (बृ. ४-३-१५) इत्यसङ्गत्वश्रुतेः कर्तुरिष्टसाधनबोधकविधिवाक्येन विरोधोऽस्ति न वेति सन्देहे पूर्वोक्तशास्त्रार्थवत्त्वादिहेतुभिः कर्तृत्वस्य स्वाभाविकतया तत्प्रतिपादकविधिशास्त्रेण विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु न स्वाभाविकमात्मनः कर्तृत्वं किन्त्वौपाधिकम् । यथा लोके उभयथा तक्षा वास्यादीनि करणान्यपेक्ष्य कर्त्ता सन् दुःखी भवति अनपेक्ष्य तु स्वरूपेणाकर्ता सुखी भवति, तथात्मापि बुद्ध्यादिकरणान्यपेक्ष्य कर्ता संसरति अनपेक्ष्य तु

---

१ 'अपि त्वौ' इति खपुस्तके पाठः.

## अंशो नानाव्यपदेशादन्यथा चापि दाशाकितवादित्वमधीयत एके ॥ ४३ ॥

अत्र 'तत्त्वमस्या'द्यभेदश्रुतिजातस्य 'य आत्मनि तिष्ठन्' इत्यादिभेदश्रुतिजातेन विरोधोऽस्ति न वेति सन्देहे जीवेश्वरयोः पूर्वोक्तोपकार्योपकारकभावस्य स्वामिभृत्यवद् भेदाधीनसम्बन्धसापेक्षत्वाद् भेदश्रुतिजातेन विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु जीव ईश्वरस्यांश इवांशो न तु स्वाभाविकोऽशः तस्य 'निष्कलम्' (श्वे. ६-१९) इत्यादिनिरंशत्वश्रवणात् । अतः कल्पितांशो जीवः । कुतः पुनर्जीवेश्वरयोरशांशिभावः, 'य आत्मनि तिष्ठन्नि'त्यादिना तयोर्नानाव्यपदेशान्नानात्वस्य व्यपदेशाद्, अन्यथा चाप्यनानात्वस्यापि व्यपदेशात् । तथा हि—एके शाखिन आथर्वणिकाः 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवा' इति दाशकितवादित्वमधीयते । दाशाः कैवर्ताः, दासा भृत्याः, कितवा द्यूतकृतः तद्भावमामनन्तीत्यतो नानात्वस्याभेदस्य च व्यपदेशः । तत्र भेदवादिश्रुतिजातस्य प्रत्यक्षसिद्धभेदानुवादेनाभेदपरत्वात् कल्पितभेदवानशो जीव इति ॥ ४३ ॥

किञ्च—

## मन्त्रवर्णाच्च ॥ ४४ ॥

'पादोऽस्य (विश्वा ?) (सर्वा) भूतानि' (छा. ३-१२ ६) इति मन्त्रवर्णात् परमेश्वरस्याविद्याकल्पितपादोंऽशो भूतशब्दवाच्यो जीव इति गम्यते ॥ ४४ ॥

अपि च—

## अपि च स्मर्यते ॥ ४५ ॥

'ममैवांशो जीवलोके जीवभूतः सनातनः' (१९-७) इति भगवद्गीतासु चेश्वरस्याविद्याकल्पितांशो जीव इति स्मर्यते ॥ ४५ ॥

ननु जीवस्येश्वरांशत्वे तद्दुःखेनेश्वरस्य दुःखित्वं स्यादित्यत आह—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवोऽविद्यावेशवशाद् देहाद्यात्मभावमिव गतस्तत्कृतेन दुःखेन दुःख्यहमित्यभिमन्यते नैवं पर ईश्वरः, प्रकाशादिवद्, यथा सौरश्चान्द्रमसो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमिवापन्नोऽपि न वस्तुतो वक्रभावमापद्यते, तद्वज्जीवोऽपि न परमार्थतो दुःखित्वमभिमन्यत इत्यर्थः ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

'तत्र यः परमात्मासौ स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥'

इत्यादिना व्यासादय ईश्वरस्य सांसारिकदुःखासंस्पर्शित्व स्मरन्तीत्यर्थः ॥ ४७ ॥

ननु 'नान्योऽतोऽस्ति द्रष्टा' (बृ. ३-७-२३) इत्यादिनात्मभेदमात्रनिषेधात् कथं 'मित्रं सेव्य' 'शत्रवः परिहर्तव्या' इत्याद्यनुज्ञापरिहारौ स्यातामित्यत आह—

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

उक्तावनुज्ञापरिहारौ सर्वत्रात्मनोऽखण्डैकरसत्वेऽपि देहतादात्म्यसम्बन्धात् सङ्गच्छेते ज्योतिरादिवद्, यथा ज्योतिषोऽग्नेरेकत्वेऽपि श्मशानसम्बन्ध्यग्निः परिहार्यो नेतरः, तद्वदात्मापीत्यर्थः ॥ ४८ ॥

नन्वेवमपि स्वाम्येकत्वात् कर्मफलसङ्करो दुर्वार इत्यत आह—

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

कर्मफलसम्बन्धस्याव्यतिकरः असङ्करः, कुतः, असन्ततेः उपाधिपरिच्छिन्नस्यात्मनः सर्वैः शरीरैरसम्बन्धादित्यर्थः ॥ ४९ ॥

किञ्च—

## आभास एव च ॥ ५० ॥

आभास एवैष जीवः परस्यात्मनः सूर्यप्रतिबिम्बवत्। ततश्च यथैकस्मिन् प्रतिबिम्बे कम्पमाने प्रतिबिम्बान्तरं न कम्पते तथैकस्मिन् जीवे कर्मफलसम्बन्धिनि न जीवान्तरस्य तत्सम्बन्ध इति सङ्करः सुपरिहरः। स्वाभाविकात्मनानात्ववादे तु कर्मफलसङ्करो दुर्वार इति दिक् ॥ ५० ॥

ननु नानात्मवादेऽदृष्टनियमात् कर्मफलनियम इति चेत् तत्राह—

## अदृष्टानियमात् ॥ ५१ ॥

साङ्ख्यमते प्रधानसमवेतमदृष्टम्। तस्य सर्वात्मसाधारण्यात् स दोषस्तदवस्थः। न्यायमतेऽप्यदृष्टहेतुमनस्संयोगस्य सर्वात्माविशेषादिदमस्यादृष्टमिदमस्य नेत्येवंरूपस्यादृष्टनियमस्याभावात् फलानियम इत्यर्थः ॥ ५१ ॥

नन्वहमिदं फलं प्राप्नुयामित्यभिसन्ध्यादयः प्रत्यात्मनियताः सन्तः स्वप्र-

योज्यादृष्टनियमहेतवो भविष्यन्तीत्यत आह—

**अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥**

अभिसन्ध्यादिष्वपि साधारणमनःसंयोगसाध्येष्वदृष्टनियमहेतुत्वाभाव इत्युक्तदोषस्तदवस्थः ॥ ५२ ॥

**प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥**

नन्वात्मनां विभुत्वेऽपि स्वस्वशरीरावच्छिन्न एवात्मप्रदेशे मनस्संयोग इत्यभिसन्ध्यादिनियम इति चेन्न सर्वात्मना सर्वशरीरेष्वन्तर्भावादस्यात्मन इदं शरीरमिति नियमाभावात् प्रदेशकल्पना न सम्भवतीत्युक्तसङ्करस्तदवस्थ एव। अस्मत्पक्षे जीवभेदस्याविद्यकत्वेन न सङ्करः। तथा चाविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयत तत्त्वमस्यादिश्रुतिजातस्याविद्यकभेदानुवादश्रुतिजातेन न विरोध इति सिद्धम्। तदेवं भूतभोक्तृविषयश्रुतीनां मिथो विरोधव्यासेधेन प्रामाण्याद् ब्रह्मणि समन्वयः सिद्ध इत्यतिशोभनम् ॥ ५३ ॥

अस्मिन् पादे सप्तदशाधिकरणानि। सूत्राणि त्रिपञ्चाशत्।

इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
द्वितीयाध्यायस्य तृतीयः पादः।

---

## अथ चतुर्थः पादः।

* १ प्राणोत्पत्त्यधिकरणम् *

इत्थं पूर्वपादे भूतभोक्तृश्रुतिविरोधं विधूयाधुना भौतिकेन्द्रियादिश्रुतिविरोधं परिहर्तुं पादान्तरमवतारयन् पूर्वाधिकरणे कर्तृस्वरूपावधारणेन बुद्धिस्थानां तदुपकरणानामिन्द्रियाणामुत्पत्तिं साधयतीति बुद्धिस्थसङ्गत्येदमाह—

**तथा प्राणाः ॥ १ ॥**

अत्र च 'एतस्माज्जायते प्राण' (मु. २-१-३) इत्यादीन्द्रियोत्पत्तिश्रुतेः 'ऋषयो वाव तेऽग्रेऽसदासीद्' इत्याद्या प्रागुत्पत्तेरिन्द्रियसद्भावश्रुत्या विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति पूर्वः पक्षः। सिद्धान्तस्तु तथा प्राणाः 'एतस्माज्जायत' इत्युदाहृतवाक्यस्थाकाशादिवत् प्राणा इन्द्रियाणि जायन्ते उत्पत्तिश्रुतेरविशेषादित्यर्थः ॥ १ ॥

ननु सृष्टेः प्रागिन्द्रियसद्भावश्रवणाद् उत्पत्तिश्रुतिर्गौणीति चेत्, तत्राह—

गौण्यसम्भवात् ॥ २ ॥

गौण्या उत्पत्तिश्रुतेरसम्भवो गौण्यसम्भवस्तस्माद्, अन्यथा एकविज्ञानप्रतिज्ञा हीयेतेत्यर्थः। सद्भावश्रुतिस्तु हिरण्यगर्भात्मकावान्तरप्रकृतिविषयेति न तयोत्पत्तिश्रुतिविरोध इति भावः॥ २ ॥

इन्द्रियोत्पत्तिर्मुख्येत्यत्र हेत्वन्तरमाह—

तत्प्राक्छ्रुतेश्च ॥ ३ ॥

तत्र 'एतस्माज्जायते' (मु. २-१ ३) इत्यादिवाक्ये जन्मवाचिपदस्य खवाय्वादिषु मुख्यस्य तदपेक्षया प्राचीनेषु प्राणादिषु श्रुतेः श्रवणादित्यर्थः॥ ३ ॥

ननु 'तत् तेजोऽसृजत' इति भूतमात्रश्रवणात् तत् कथमित्याशङ्क्याह—

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत् तेजोऽसृजत' (छा. ६-२-३) इति भूतमात्रोत्पत्तिः पठ्यते, तथापि 'अन्नमयं हि सोम्य! मन आपोमयः प्राणस्तेजोमयी वाग्' (छा. ६-५-४) इति मनःप्राणसहिताया वाचो ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानादस्त्युत्पत्तिश्रुतिः। अतो न विरोध इति सिद्धम्॥ ४ ॥

* २ सप्तगत्यधिकरणम् *

इत्थमिन्द्रियाणामुत्पत्तिं प्रसाध्य तेभ्यो जीवस्य विवेकार्थं तदाश्रितसङ्ख्यां निर्णेतुकाम आश्रयाश्रयिभावसङ्गत्येदमाह—

सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

'सप्त प्राणाः प्रभवन्ति तस्माद्' (मु. २-१-८) इतीन्द्रियाणि सप्त सङ्कीर्त्यन्ते, क्वचिदष्टौ, क्वचिन्नव, क्वचिद् दश, क्वचिदेकादशेत्येवं सप्तत्वाष्टत्वादिसङ्ख्याश्रुतीनां परस्परविरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वपक्ष एकदेशीसिद्धान्तः—सप्तेन्द्रियाणि, कुतः, गतेः श्रुत्या सप्तत्वावगतेः 'सप्त वै शीर्षण्याः प्राणाः' (तै सं. ५-१-७-१) इति शीर्षण्यत्वेन विशेषितत्वाच्च। अष्टत्वादिसङ्ख्याश्रवणं त्वेकस्यैवान्तःकरणस्य वृत्तिभेदाभिप्रायमिति न श्रुतीनां विरोध इति॥ ५ ॥

तदेकदेशिमतं दूषयति—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

तुरेकदेशिमतनिरासार्थः । 'हस्तौ वै ग्रह' (बृ. ३-२-८) इत्यादिना हस्तादयोऽप्यतिरिक्ताः प्राणाः श्रूयन्ते । सप्तत्वसङ्ख्यायामसम्भावितान्तर्भावे सप्तत्वातिरेके स्थिते सप्तत्वसङ्ख्यैकादशत्वसङ्ख्यायामन्तर्भावयितु शक्यते । अतो नैवं मन्तव्यं सप्तैव प्राणा इति ॥ ६ ॥

एवं वा सूत्रद्वयं योजनीयम् । सप्तैवेन्द्रियाणि 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ ४-४-२) इति प्राणादिसप्तानामेव गतेः श्रवणात् । ननु सर्वशब्दश्रवणात् कथं सप्तानामेवेति तत्राह विशेषितत्वाच्च 'यत्रैष चाक्षुषः पुरुष' (बृ. ४-४-१) इत्यादिना चक्षुरादिसप्तानामेवोत्क्रान्तौ विशेषितत्वात् ॥

अतः सर्वशब्दस्य प्रकृतापेक्षत्वात् सप्तैवोत्क्रामन्तीति प्राप्ते उच्यते हस्तादयोऽप्यपरे प्राणा उत्क्रामन्ति 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्माच्छरीरादुत्क्रामन्त्यथ रोदयन्ति' (बृ. ३-९-४) इत्येकादशानां प्राणानामुत्क्रान्तिश्रवणात् सर्वेषामेवोत्क्रमणे स्थिते सति नैवं यत् सप्तैवेति । तस्मान्न श्रुतीनां मिथो विरोध इति सिद्धम् ॥

* ३ प्राणाणुत्वाधिकरणम् *

नन्विन्द्रियाणामुत्क्रान्तिर्न सम्भवति तेषामपरिच्छिन्नाहङ्कारजन्यत्वेन विभुत्वादित्याक्षेपसङ्गत्येदमाह—

## अणवश्च ॥ ७ ॥

अत्रोत्क्रान्त्यादिश्रुतेः 'प्राणाः सर्वेऽनन्ता' इतीन्द्रियविभुत्वश्रुत्या विरोधोऽस्ति न वेति सन्देहे विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु इमे प्राणा अणवः परिच्छिन्नाः इन्द्रियाग्राह्यत्वेन सूक्ष्मत्वाद् विभुत्वश्रुतेरुपासनापरत्वान्न तयोत्क्रान्त्यादिश्रुतेर्विरोध इति सिद्धम् ॥ ७ ॥

* ४ प्राणश्रैष्ठ्याधिकरणम् *

इत्थं मुख्यप्राणातिरिक्तप्राणानां सृष्ट्यादिकं शिष्ट्वा मुख्येऽपि प्राणे प्रथमाधिकरणन्यायमतिदिशति—

## श्रेष्ठश्च ॥ ८ ॥

अतिदेशत्वान्न पृथक्सङ्गत्यपेक्षा । अत्र 'एतस्माज्जायते प्राण' (मु. २-१-३)

इति मुख्यप्राणोत्पत्तिश्रुतेः 'आनीदवातम्' (ऋ सं. ८-७-१७) इति सृष्टेः प्राङ्महाप्रलये प्राणसद्भावश्रुत्या विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु इन्द्रियवच्छ्रेष्ठोऽपि प्राणो ब्रह्मणो जायते । अत 'आनीदवातमि'ति श्रुतावानीच्छब्दः कारणसद्भावं दर्शयति । अवात प्राणरहितमिति विशेषणान्न तया श्रुत्या प्राणोत्पत्तिश्रुतेर्विरोध इति सिद्धम् ॥ ८ ॥

५ वायुक्रियाधिकरणम्

उत्पत्तिचिन्तानन्तरमुत्पत्तिमतः प्राणस्य स्वरूपं चिन्त्यत इति प्रसङ्गसङ्गत्येदमाह—

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

तत्र मुख्यप्राणः किं वायुरेव, उतेन्द्रियव्यापार, आहोस्विद् वायुविशेष इति सन्देहे 'य. प्राण स वायु' इति 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु. २-१-३) इति प्राणभेदाभेदश्रुत्योरुभयोर्विरोधे मुख्यार्थत्वासम्भवेन स्तोककल्पनानुरोधाद् भेदश्रुतेर्गौणत्वे वायुरेव प्राण इत्येकः पूर्व. पक्षः । भेदश्रुत्यवष्टम्भेऽपि धर्मिभेदाद् धर्मभेदो लघीयानिति न्यायेन सर्वेन्द्रियव्यापार एव प्राण इत्यपरः पूर्वः पक्षः । सिद्धान्तस्तु न वायुक्रिये, मुख्यप्राणो न वायुर्नापि क्रियेन्द्रियव्यापारः, किन्तु वायुविशेष एव, कुत', 'स वायुना ज्योतिषा' (छा. ३-१-८४) इति पृथगुपदेशात् । तथा 'एतस्माज्जायते प्राण' इत्यादिना करणेभ्य' पृथगुपदेशात् । न हीन्द्रियव्यापारस्यव सत इन्द्रियेभ्य' पृथगुपदेशो युज्यते । तस्माद्वायुविशेषोऽध्यमध्यात्मभावापन्नः पञ्चवृत्ति प्राण । ततश्च न श्रुत्योर्विरोध इति सिद्धम् ॥ ९ ॥

इन्द्रियव्यापार प्राणो न चेत्, तर्हि तस्येन्द्रियवत् करणत्वानङ्गीकाराज्जीववत् स्वातन्त्र्य स्यादित्यत आह—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुरुक्तशङ्कानिरासार्थः । न जीववत् प्राणः स्वतन्त्र. किन्तु चक्षुरादिवज्जीवं प्रति करणभूत , कुत', तत्सहशिष्ट्यादिभ्यस्तैश्चक्षुरादिभि. सह प्राणसंवादादिषु प्राणस्य शिष्टेः शासनात्, सजातीयानामेव सहशासनस्य युक्तत्वात् । अचेतनत्वभौतिकत्वादिहेतुसङ्ग्रह आदिशब्दार्थ' ॥ १० ॥

ननु प्राणस्य जीवोपकरणत्व चेत्, तर्हि विषयान्तर स्वरूपान्तरवत् प्रस-

ज्येतेत्यत आह—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

अकरणत्वान्न प्राणस्य विषयान्तरापेक्षादोषः, इन्द्रियान्तरेष्वसम्भावितासाधारणदेहादिधारणाख्यव्यापारस्य निर्वाहकत्वात् । तथा हि 'प्राणस्यासाधारणव्यापारं' 'तान् वरिष्ठः प्राण उवाच' 'एतद् बाणमवष्टभ्य विधारयामि' (प्र. २-३) इति श्रुतिर्दर्शयतीत्यर्थः ॥ ११ ॥

न केवलं देहधारणमेवास्यासाधारणम् , अपि त्वन्यदपीत्याह—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

यथा मनोऽनेकवृत्त्याख्यासाधारणव्यापरापेक्षयानेकधा व्यपदिश्यते । एवमुच्छ्वासनिश्वाससर्वशरीरक्रियोत्क्रान्त्याख्याश्चत्वारो व्यापाराः । भक्षितान्नादिरसानां समत्वेन सर्वाङ्गेषु नयन पञ्चमो व्यापारः । तानपेक्ष्य पञ्चवृत्तिः प्राणो व्यपदिश्यते क्रमेण प्राणोऽपानो व्यान उदानस्समान इति । तदसाधारणव्यापारापेक्षया जीवोपकरणत्वं मनोवदिति सिद्धम् ॥ १२ ॥

( ६ श्रेष्ठाणुत्वाधिकरणम् )

इत्थं मुख्यस्य प्राणस्योत्पत्तिं स्वरूपं चाभिधाय परिमाणमतिदेशेनाह—

अणुश्च ॥ १३ ॥

प्राणस्यान्तरङ्गस्वरूपकथनानन्तरं बहिरङ्गपरिमाणमतिदिश्यत इत्यन्तरङ्गबहिरङ्गलक्षणा सङ्गतिः पूर्वेणास्य बोध्या । उत्क्रान्त्यादिश्रुतेः 'सम एभिस्त्रिभिर्लोकैः' (बृ. १-३-२२) इत्यादिप्राणविभुत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु चक्षुरादिवत् प्राणोऽप्यणुः परिच्छिन्नः सूक्ष्मश्च । 'सम एभिरि'ति श्रुतिः स्थूलवायुपरा नाध्यात्मिकप्राणमात्रपरेत्यनयोर्न विरोध इति सिद्धम् ॥ १३ ॥

( ७ ज्योतिराद्यधिकरणम् )

प्राणस्याध्यात्माधिदैवतविभागेनाणुत्वविभुत्वनिरूपणप्रसङ्गेनाध्यात्मिकानामिन्द्रियाणामाधिदैविकाद्यधिष्ठितानां चेष्टामाचष्ट इति प्रसङ्गसङ्गत्येदमाह—

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

१. 'ख्यप्राणस्य' ख. पाठ. २ 'द्यधिष्ठानानाम्' क पाठ.

अत्र 'आदित्यश्चक्षुर्भूत्वा' (ऐ. २-४) इत्यादीन्द्रियाणां देवताधीनचेष्टावत्त्वश्रुतेः, 'चक्षुषा हि रूपाणि पश्यति' (बृ. ३-९-२०) इति श्रुत्या विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु ज्योतिरादिभिरादित्यादिदेवताभिरधिष्ठीयते प्रेर्यत इत्यधिष्ठानमाधिष्ठितमेव वागादिकं चेष्टते । कुतः, तदामननात् तस्य देवताधिष्ठितत्वस्य 'आदित्यश्चक्षुरि'त्यादिश्रुत्याभिधानात् 'चक्षुषा ही'ति श्रुतौ तु देवताधिष्ठितत्वानिषेधान्न तयैतस्या विरोध इति सिद्धम् ॥ १४ ॥

ननु देवतानामेवाधिष्ठातृत्वं चेत्, तर्हि भोक्तृत्वं प्रसज्येतेत्यत आह—

**प्राणवता शब्दात् ॥ १५ ॥**

प्राणवता जीवेनेन्द्रियाणां[1] स्वस्वामिभावः सम्बन्धः । ततश्चेन्द्रियसाध्यभोगभागित्वं जीवस्यैव न देवतानां, कुतः, शब्दात् 'स चाक्षुषः पुरुषो दर्शनाय चक्षुः' (छा. ८-१२-४) इत्यादिश्रुतेरित्यर्थः ॥ १५ ॥

**किञ्च**—

**तस्य च नित्यत्वात् ॥ १६ ॥**

तस्य जीवस्य स्वधर्मार्जिते काये कर्तृत्वेन च भोक्तृत्वेन च नित्यत्वान्न देवतानां भोक्तृत्वमस्मिञ्छरीर इत्यविरोध इति सिद्धम् ॥ ११ ॥

* ८ इन्द्रियाधिकरणम् *

ननु सत्स्विन्द्रियेषु तदधिष्ठातृदेवताचिन्ता । तान्येव प्राणव्यापारव्यतिरेकेण न सन्तीत्याक्षेपसङ्गत्येदमाह—

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥**

अत्र 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि' (मु. २-१-३) इति मुख्यप्राणादीन्द्रियाणां तत्त्वान्तरत्वश्रुतेः 'त एतस्यैव सर्वे रूपमभवन्' (बृ. १-५-२१) इति प्राणात्मकत्वश्रुत्या विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु श्रेष्ठान्मुख्यप्राणादन्यत्राप्येते प्रकृता वागादय इन्द्रियाणीत्युच्यन्ते न प्राणाः, कुतः, 'एतस्माज्जायत' इत्यादौ तस्य भेदस्य व्यपदेशादिन्द्रियाणां प्राणात्मकत्वश्रुतेर्गौणत्वेन न तया विरोधः ॥ १७ ॥

**किञ्च**—

१. 'नैवेन्द्रि' खपुस्तके पाठः.

भेदश्रुतेः ॥ १८ ॥

वागादीन्द्रियप्रकरणमुपसंहृत्य 'अथ हेममासन्यं प्राणमूचुः' (बृ. १-३-७) इति भिन्नप्रकरणे प्राणस्येन्द्रियेभ्यो भेदेन श्रवणान्न प्राणव्यापारत्वमिन्द्रियाणां, (किन्तु) तत्त्वान्तरत्वमित्यर्थः ॥ १८ ॥

किञ्च —

वैलक्षण्याच्च ॥ १९ ॥

सुषुप्त्यवस्थायां प्राणस्य स्थितिर्नेन्द्रियाणामित्यादिबहुवैलक्षण्यात् तत्त्वान्तरत्वान्नानयोर्विरोध इति सिद्धम् ॥ १९ ॥

॥ ९ सञ्ज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

पूर्वं नामरूपभेदात् प्राणेन्द्रिययोर्भेद इत्युक्तम् । तत्प्रसङ्गेन नामरूपव्याकरणं किंकर्तृकमिति विचार्यत इति प्रसङ्गसङ्गत्येदमाह —

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

उत्पद्यमानव्यापाररूपोत्पत्तिविषयश्रुतिविप्रतिषेधपरिहारानन्तरमुत्पादकव्यापाररूपोत्पादनविषयश्रुतिविप्रतिषेधः परिह्रियते । तत्रात्रिवृत्कृतानामुत्पादनं पारमेश्वरमेव । त्रिवृत्कृतभौतिकोत्पादने तु श्रुतिविप्रतिपत्तिर्दृश्यते । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति' (छा. ६-३-२) 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा. ६-३-३) इति जीवकर्तृकत्वश्रुतेः 'आकाशो ह वै नामरूपयोर्निर्वहिता' (छा. ८-१४-१) इति परमेश्वरकर्तृकत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु सौत्रतुशब्दः पूर्वपक्षनिरासार्थः । 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्कुर्वतः परमेश्वरस्यैव संज्ञामूर्तिक्लृप्तिर्नामरूपव्याक्रिया भवितुमर्हति, कस्मात्, 'सेयं देवता' इत्युपक्रम्य, 'व्याकरवाणि' इति व्याकरणस्य परदेवताकर्तृकत्वोपदेशात् । न च 'अनेन जीवेन' इति विशेषणाद् जीवकर्तृकम् अल्पमेधसो जीवस्य महीधरमहोदधिव्याकरणे सामर्थ्याभावाद् 'अनेन जीवेन' इत्यस्य सान्निहितेन 'अनुप्रविश्य' इत्यनेन सम्बन्धाच्च नानयोर्विरोध इति ॥ २० ॥

इत्थं बाह्यं त्रिवृत्करणमभिधायाध्यात्मिकं परं त्रिवृत्करणमभिधातुमाह —

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

भूमेरन्नात्मिकायास्त्रिवृत्कृतायाः कार्यं भौमं मांसादि । आदिशब्देन पुरीष-

मनसी गृह्येते । तदाह श्रुतिः 'अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः' (छा. ६-५-१) इति । एवमितरयोरपतेजसोर्यथाशब्दं कार्यमवगन्तव्यं, 'मूत्रं लोहितं प्राणश्चापां कार्यमस्थि मज्जा वाक् तेजस' इति ॥ २१ ॥

ननु सर्वेषां त्रिवृत्करणाविशेषाद् 'इयं पृथिवी इमा आप इदं तेज' इत्यसाधारणः पृथग्व्यवहारः कथ सङ्गच्छते, कथं वाध्यात्मिकव्यवहारः 'इदं मांसादि पृथिवीकार्यम् इदं जलस्य इदं च तेजस' इति । तत्राह—

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥**

तुशब्दः शङ्कानिरासार्थः । सर्वेषां पृथिव्यादीनां त्रिवृत्करणाविशेषेऽपि वैशेष्यात् स्वभागाधिक्यात् तद्वादः पृथिव्यादिवादः सङ्गच्छते । तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तदेवं सर्वासां श्रुतीनामविरोधे प्रामाण्यान्निरवद्याद्वितीये ब्रह्मणि सिद्धः समन्वय इत्यतिशोभनम् ॥ २२ ॥

मिथस्त्रय्यन्तवाक्यानामविरोधे प्रमात्वतः ।
सिद्धः समन्वयो यस्मिंस्तदस्मि ब्रह्म चिद्घनम् ॥

अस्मिन् पादे नवाधिकरणानि, सूत्राणि द्वाविंशतिः ।

अस्मिन् अविरोधाध्याये सप्तचत्वारिंशदधिकरणानि
सूत्राणि सप्तपञ्चाशदुत्तरशतम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्ज-
सेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां
**ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**
द्वितीयाध्यायस्य चतुर्थः पादः ।
समाप्तश्चाविरोधाध्यायः ।

---

## अथ तृतीयोऽध्यायः ।

* १ तदन्तरप्रतिपत्त्यधिकरणम् *

पूर्वस्मिन्नध्याये ब्रह्मणि समन्वयस्य स्मृतिन्यायश्रुतिविरोधव्यासेधेनानध्यवसायलक्षणाप्रामाण्यप्रतिक्षेपे तार्तीयीको विचारो भवतीति हेतुहेतुमद्भावसङ्गत्यायम-

१. 'धनिरासेन' खपुस्तके पाठ.

ध्याय आरभ्यते । पूर्वं जीवोपकरणभूतभौतिकजन्म निरूपितम् । तदुपजीव्य तदुपहितस्य जीवस्य संसारप्रकार वैराग्यार्थं निरूपयितुं देहान्तरारम्भे भूतसूक्ष्मसम्परिष्वक्तस्यैव परलोकगमनमित्याह —

**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ।।१ ॥**

अत्र पूर्वपक्षे निराधारप्राणादिगमनासम्भवान्न वैराग्यं, सिद्धान्ते तत्सम्भवाद्वैराग्यमिति फलभेदः । स जीवः किं देहान्तरारम्भकैः पञ्चीकृतभूतभागैरसम्परिष्वक्तो गच्छति उत सम्परिष्वक्त इति सन्देहे मानाभावादसम्परिष्वक्त इति पूर्वः पक्षः । सिद्धान्तस्तु तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ तदारम्भकभूतैः सम्परिष्वक्तो रंहति गच्छति । कुतः, प्रश्ननिरूपणाभ्यां 'वेत्थ यथा पञ्चम्यामाहुतावाप' पुरुषवचसो भवन्ति' (छा. ५-३-३) इति प्रश्नः । द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा. ५-९-१) इति निरूपणं प्रतिवचनम् । ताभ्यामित्यर्थः ॥ १ ॥

नन्वेवमद्भिः सम्परिष्वक्तो गच्छतीति गम्यते । कथं तदितरभूतपरिष्वङ्गसिद्धिः । तत्राह —

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

त्रिवृत्करणश्रुत्यापामितरभूतद्वयमेलनेन त्र्यात्मकत्वात् । कथं तर्हि श्रुतावब्भूयस्त्वं, तेजआद्यपेक्षयापां देहे भूयस्त्वादित्यर्थः ॥ २ ॥

**प्राणगतेश्च ॥ ३ ॥**

प्राणानां 'तमुत्क्रामन्तम्' (बृ. ४-४-२) इत्यादिना भूताश्रितानामेव गतेः श्रवणात् तत्सम्परिष्वङ्गसिद्धिः ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

'मृतस्याग्निं वागप्येति वातं प्राणः' (बृ. ३-२-१३) इत्यादिनाग्न्यादिषु गतिश्रुतेर्लयश्रवणान्न जीवेन वागादयो गच्छन्तीति चेन्न । वागादिलयश्रुतेः 'ओषधीर्लोमानि' (बृ. ३-२-१३) इतिवद् भाक्तत्वादित्यर्थः ॥ ४ ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

द्युलोकादिषु पञ्चाग्निषु प्रथमे द्युलोकाग्नौ 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा. ५-४-२) इति श्रद्धाया आहुतित्वश्रवणादपामश्रवणात् कथं पुरुषवचस्त्वमिति चेन्न, हि यत 'आपो हास्मै श्रद्धां सन्नमन्ते' इति श्रद्धाशब्देन तद्वेतवस्ता एवापो लक्ष्यन्ते । अतः प्रश्ननिरूपणयोरुपपत्तेरित्यर्थः ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

श्रद्धाशब्दितानामपां पुरुषवचस्त्वेऽपि तद्वेष्टितत्वं जीवस्य न युज्यते अबादिवज्जीवस्याश्रुतत्वादिति चेन्न, कुत', 'अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा. ५ १०-३) इत्यादिना वाक्यशेषेणेष्टापूर्त्तकर्मकारिणां प्रतीतेरित्यर्थः ॥ ६ ॥

नन्विष्टादिकारिणां धूमादिमार्गेण चन्द्रलोकं गतानां 'तं देवा भक्षयन्ति' (छा. ५-१०-४) इति देवैर्भक्ष्यत्वं श्रूयते । अतः कथं तेषां स्वकर्मफलभोगसिद्धिरित्यत आह—

## भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

वाशब्दश्चोदितदोषनिरासार्थः । तेषामिष्टादिकारिणामन्नत्वं भाक्तमेव न मुख्यम् अन्यथा 'स्वर्गकामो यजेत' इति श्रुतिव्याकोपात् । अतस्तेषामनात्मवित्त्वाद् देवोपभोग्यत्वमेवान्नत्वम् । तथा हि दर्शयति 'अथ योऽन्यां देवतामुपास्ते' (बृ. १-४-१०) इत्यादिश्रुतिरित्यर्थः । तस्मात् परलोकभोगार्थं भूतसम्परिष्वक्तस्य रंहणमिति सिद्धम् ॥ ७ ॥

* २ कृतात्ययाधिकरणम् *

पूर्वं कर्मसमवेतानामपां पञ्चमाहुतौ पुरुषात्मना परिणामश्रवणं हेतुमाश्रित्याबादिभूतपरिवेष्टितस्य रंहणमुक्तम् । तदयुक्तं, स्वर्गादवरोहतां जीवानां कर्माभावेन तत्समवेतानामपामप्यभावादित्याक्षेपसङ्गत्येदमाह —

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

अत्र पूर्वपक्षे अवरोहतां कर्माभावेन तदनुगुणतिर्यगादियोनिप्राप्त्ययोगान्न कर्मफलेषु वैराग्यं सिद्धान्ते कर्मणः सत्त्वाद्वैराग्यमिति फलभेदः । एवं हि स्वर्गि-

---

१. 'पः स्यात्' खपुस्तके पाठः. २. 'अप्स्यामाहु' खपुस्तके पाठः.

णामवरोहण श्रूयते 'तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वान पुनर्निवर्तन्ते' (छा. ५-१०-५) इत्यादि। तत्र किं स्वर्गादवरोहन्तः सानुशया उत निरनुशया इति सन्देहे निरनुशया इति पूर्वः पक्षः। सिद्धान्तस्तु कृतस्य स्वर्गप्रापककर्मजातस्य भोगेनात्यये नाशेऽनुशयवान् अनुशयशब्देनामुष्मिकफलप्रापककर्मातिरिक्तं कर्मोच्यते। तद्वानेवावरोहति, कुतः, दृष्टस्मृतिभ्याम्। 'तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीया योनिमापद्येरन्' (छा. ५-१०-७) इत्याद्या दृष्टा प्रत्यक्षा श्रुतिः। प्रेत्य कर्मफलमनुभूय ततः शेषेण 'विशिष्टदेशकालकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति स्मृतिः। ताभ्यामनुशयवन्त एवावरोहन्तीति गम्यते। ते च येन मार्गेण चन्द्रलोकमारूढास्तेनैवावरोहन्ति किं तद्विपरीतेनेत्याकाङ्क्षायामाह यथेतमनेवं च। यथेतं यथागतं धूमादिमार्गेण, अनेवं च तद्विपर्ययेण वक्ष्यमाणाभ्रादिमार्गेणावरोहन्तीत्यर्थः॥ ८॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः॥ ९॥

ननु 'रमणीयचरणा' इति श्रुतिश्चरणाद्योन्यापत्तिं दर्शयति, नानुशयात्। अन्यच्चरणमन्योऽनुशय इति नानुशयसिद्धिरिति चेन्न यतः कार्ष्णाजिनिराचार्य इयं चरणश्रुतिरनुशयोपलक्षणार्थेति मन्यते॥ ९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात्॥ १०॥

ननु चरणश्रुतेर्मुख्याचारार्थपरित्यागेनानुशयार्थकत्व आनर्थक्यमिति चेन्न। इष्टादिकर्मणामाचारनिर्वर्त्यत्वेन चरणापेक्षत्वाच्चरणश्रुतेरर्थवत्त्वमित्यर्थः॥ १०॥

वस्तुतः कर्मचरणयोर्न भेद इत्याह—

## सुकृतदुष्कृते एवेति तु बादरिः॥ ११॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देनोच्येते इति मन्यते लोक इष्टादिकारिणि धर्मं चरतीति कर्मचरणयोरभेदेन प्रयोगदर्शनात्। अत इष्टादिकारिणा चन्द्रलोकं गतानाम् पुनरवरोहार्थमनुशयोऽस्तीति सिद्धम्॥ ११॥

* ३ अनिष्टादिकार्यधिकरणम् *

पूर्वमिष्टादिकारिण एव चन्द्रलोकं गच्छन्तीत्युक्तम्। तदयुक्तम्, अनिष्टादिकारिणोऽपि गच्छन्त्वित्याक्षेपसङ्गत्येदमाह—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

अत्र पूर्वपक्षेऽनिष्टादिकारिणामविशेषेण चन्द्रलोकगतेरिष्टादिकरणं व्यर्थं, सिद्धान्ते पापिनां चन्द्रलोकगत्यभावात् तदर्थमिष्टादिकरणं सार्थकमिति फलभेदः। अत्र पापिनां चन्द्रलोकगतिरस्ति न वेति सन्देहे पूर्वः पक्षः। अनिष्टादिकारिणामपि चन्द्रलोकगमनं 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ. १-२) इति श्रुत्या श्रुतम्। अतो धर्मिण एव चन्द्रलोकं गच्छन्तीत्येतदसङ्गतमित्यर्थः ॥ १२ ॥

**एवं** पूर्वपक्षे सिद्धान्तः—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

तुशब्दः पूर्वपक्षनिरासार्थः। सयमने यमालये स्वपापानुरूपा यामीर्यातना अनुभूय पुनरिमं लोकं प्रत्यवरोहन्तीत्येवंभूतावेव तेषां पापिनामारोहावरोहौ भवतः, कुतः, तद्गतिदर्शनात्। 'अयं लोको नास्ति पर इतिमानी पुनःपुनर्वशमापद्यते मे' (कठ. २-६) इति श्रुतौ यमवशत्वलक्षणतद्गतेर्दर्शनादित्यर्थः ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

मन्वादयः शिष्टाः पापिनां नरकभोगं स्मरन्ति। अतश्च धर्मिणामेव चन्द्रलोकगमन नान्येषामित्यर्थः ॥ १४ ॥

## अपि च सप्त ॥ १५ ॥

अपि च सप्त रौरवादयो नरकाः पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः। तान् पापिनः प्राप्नुवन्ति न चन्द्रलोकमित्यर्थः ॥ १५ ॥

**ननु** पापिनो यामीर्यातना अनुभवन्तीति यदुक्तं तदसङ्गतं रौरवादौ चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्यत आह—

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि च रौरवादिषु तस्यैव यमस्याधिष्ठातृव्यापारादविरोधः, चित्रगुप्तादीनां यमप्रयुक्तत्वादिति भावः ॥ १६ ॥

**उपासकानामर्चिरादिमार्गः** केवलकर्मिणां धूमादिमार्ग इति श्रुतिस्मृतिषु व्यवस्था। तथा चैतन्मार्गद्वयभ्रष्टानां पापिनां तृतीयमार्गोक्तेरपि न तेषां चन्द्रलोकप्राप्तिरित्याह—

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति' (छा. ५-१०-८) इत्यादावेतयोरिति पदस्यार्थः सूत्रे विद्याकर्मणोरितीति, कुतः, विद्याकर्मणोरेव देवयानपितृयाणात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात् प्रकृतवाचकत्वमेतच्छब्दस्य युक्तमित्यर्थः। सूत्रे तुशब्देन 'चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौ. १-२) इति श्रुतिप्रयुक्तशङ्कानिरासः कृतः सर्वस्य पुण्यपुरुषमात्रपरत्वादिति भावः ॥ १७ ॥

ननु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा. ५-३-३) इति सङ्ख्यानियमेन देहप्राप्त्यभिधानात् तदर्थं पापिनां चन्द्रलोकगमनमङ्गीकर्तव्यमित्यत आह—

## न तृतीये तथोपलब्धेः ॥ १८ ॥

तृतीये मार्गे प्रविष्टानां पापिनां देहप्राप्त्यर्थमाहुतिसङ्ख्यानियमो नादर्तव्यः, कुतः, तथोपलब्धेः। सङ्ख्यानियमं विनैव 'जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' (छा. ५-१०-८) इति श्रुतौ तृतीये मार्गे देहप्राप्तेरुपलब्धेरित्यर्थः। इष्टादिकारिणामेवाय सङ्ख्यानियम इति भावः ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

अपि च लोके भारतादौ द्रोणधृष्टद्युम्नादीनामयोनिजत्वं स्मर्यते। तत्र द्रोणादीनां योषिदाहुतिरेका नास्ति। धृष्टद्युम्नादीनां योषित्पुरुषविषये[1] द्वे आहुती न स्त इति आहुतिसङ्ख्यानियमो नास्ति। एवमन्यत्रापीति भावः ॥ १९ ॥

## दर्शनाच्च ॥ २० ॥

किञ्च लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधदेहेषु स्वेदजोद्भिज्जयोः स्त्रीपुंसव्यक्तिसंयोगं विनैवोत्पत्तिदर्शनान्नाहुतिसङ्ख्यानियम इत्यर्थः ॥ २० ॥

ननु त्रीण्येव बीजानि भवन्ति 'आण्डजं जीवजमुद्भिज्जम्' (छा. ६-३-१) इति शरीरत्रैविध्यश्रवणात् कथं चातुर्विध्यमित्याह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

श्रुतौ 'आण्डजं जीवजमि'त्यत्र तृतीयशब्देनोद्भिज्जशब्देनावरोधः सङ्ग्रहः

---

१. 'रते द्वे' खपुस्तके पाठः.

संशोकजस्य स्वेदजस्य, वृक्षादिकं पृथिवीमुद्भिद्य जायते स्वेदजं तु जलमुद्भिद्येत्युभयोरवयवार्थत्वाविशेषात् । तेनास्य सङ्ग्रहः कृतः । न ह्येतावता चातुर्विध्यहानिर्भवति स्थावरजङ्गमात्मकत्वेनोभयोर्भेदस्य दुरपह्नवत्वात् । अतः अनिष्टादिकारिणां न चन्द्रलोकप्राप्तिः, अपि त्विष्टादिकारिणामेवेति सिद्धम् ॥ २१ ॥

* ४ तत्साभाव्यापत्त्यधिकरणम् *

पूर्वं 'तृतीयं स्थानमि'ति स्थानशब्दस्य मार्गद्वयोपक्रमसामर्थ्यात् तृतीयमार्गोपलक्षकत्वमुक्तम् । न तथेह भवतिश्रुतेः सादृश्यलक्षकत्वं तत्र मानाभावादिति प्रत्युदाहरणसङ्गत्येदमाह——

## तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

अत्र पूर्वपक्षे भवतिश्रुतेर्मुख्यत्वसिद्धिः, सिद्धान्ते गौणत्वसिद्धिरिति फलभेदः । पूर्वमिष्टादिकारिणोऽवरोहन्तीत्युक्तम् । अत्र तेषामवरोहप्रकारश्चिन्त्यते । श्रूयते ह्यत्रावरोहश्रुतिः—'अथैतमेवाध्वान पुनर्निवर्तन्ते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' (छा. ५-१०-५) इति । तत्र किं स्वर्गादवरोहन्तो जीवा आकाशादिस्वरूपं प्रतिपद्यन्ते उत तत्साम्यमिति विशये आकाशादिस्वरूपमिति पूर्वः पक्षः । सिद्धान्तस्तु जीवानां तैराकाशादिभिः साभाव्यापत्तिः समानो भावो रूपं येषां ते सभावाः, तद्भावः साभाव्यं सादृश्यम्, तस्यापत्तिः प्राप्तिः । कुतः, उपपत्तेः । चन्द्रलोकं गतानामनुशयिनां प्रवृत्तफलकर्मक्षयदर्शनजनितशोकाग्निना दह्यमानमिदं शरीरं करकादिवद् विलीयमानमाकाशसमं भवतीत्येतदुपपद्यते । न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । तस्मात् सादृश्यमेव प्रतिपद्यन्त इति सिद्धम् ॥ २२ ॥

* ५ नातिचिराधिकरणम् *

इत्थं पूर्वमाकाशादिषु वर्षान्तेषु पूर्वपूर्वसादृश्यानन्तरमुत्तरोत्तरसादृश्यमित्युक्तम् । तदुपजीव्यान्यद्विचार्यत इत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

## नातिचिरेण विशेषात् ॥ २३ ॥

अत्र पूर्वपक्षे अधिकारिणः सर्वत्र तत्सादृश्यपरिहारार्थं कर्तव्यप्रयत्नस्य गौरवं सिद्धान्ते तदर्थं कर्तव्यप्रयत्नस्य क्वचिल्लाघवं क्वचिद्गौरवमिति फलभेदः । अत्र किं जीवश्चिरं कालमेव सादृश्येनावस्थाय परसादृश्यं गच्छति, उतात्पमल्पमिति विशये

नियामकाभावादनियम इति पूर्वः पक्षः । सिद्धान्तस्तु जीवो नातिचिरेणाल्पकाल-मेवाकाशादिवर्षान्तैः सादृश्येनावस्थाय वर्षधाराद्वारा पृथिवीं प्रविशति, कुतः, व्रीह्यादिभावापत्त्यनन्तरम् 'अतो वै खलु दुर्निष्प्रपतरम्' (छा. ५-१०-६) इति विशेषात् ततः पूर्वं सुनिष्प्रपतरत्वं प्रतीयते । तस्य ह्याकाशादौ जीवस्य प्रतीय-माने सुखदुःखे चिरकालावस्थानाल्पकालावस्थाने भवतः, न मुख्ये तदानीं विना स्थूलशरीरं लिङ्गशरीरमात्रेण सुखदुःखोपभोगासम्भवात् । अतो व्रीह्यादिप्रवेशात् पूर्वमल्पमल्पमेव कालं तत्सादृश्येनावस्थानमिति सिद्धम् ॥ २३ ॥

* ६ अन्याधिष्ठिताधिकरणम् *

पूर्वं दुर्निष्प्रपतरशब्दस्य चिरकालावस्थानलक्षकत्वेऽपि प्रकृते व्रीह्यादिभा-वेन जायन्त इति जीवजन्मश्रुतेर्मुख्यत्वसम्भवादिति प्रत्युदाहरणसङ्गत्येदमाह—

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

अत्र पूर्वपक्षे व्रीह्यादिजन्मनो मुख्यत्वेऽनुशयिनां तत्परिहारायाधिकारिणा-धिकं प्रयतितव्यं, सिद्धान्ते तदीयसंसर्गमात्रं निराकर्तुं नाधिकं प्रयतितव्यमिति फलभेदः । तस्मिन्नेवावरोहे 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' (छा. ५-१०-६) इति श्रूयते । तत्र किं व्रीह्यादिभावेन जीवानां जनिश्रु-तिर्मुख्या उत जीवान्तरेणाधिष्ठिते व्रीह्यादौ संसर्गमात्रमिति विशये मुख्येति पूर्वः पक्षः । सिद्धान्तस्तु अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशयिनां भवति, कुतः, पूर्ववदभिलापाद् । यथाकाशादिवर्षान्तेषु कर्मपरामर्शमन्तरेणैव प्रवेश उक्तः, एवं व्रीह्यादिष्वपि कर्मपरामर्शं विनैव प्रवेशाभिलापात् । अतः कर्मपरामर्शाभावा-न्न व्रीह्यादिष्वनुशयिनां सुखादिभोगः । यत्र तु तद्भोगः, तत्र कर्मोपादानं 'रमणी-यचरणा' (छा. ५-१०-७) इत्यादिना दृश्यते । तस्माज्जनिश्रुतिः संसर्गमात्राभि-प्राया न मुख्येति सिद्धम् ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

ननु ज्योतिष्टोमादिकं कर्म पशुहिंसादियोगादशुद्धम् । तत्कारिणामनुश-यिनां व्रीह्यादिस्थावरेषु दुःखानुभवार्थं मुख्यमेव जन्मास्त्विति चेन्न, शब्दाद् विधि-शास्त्राद् अग्निष्टोमादेर्धर्मत्वेनावगतत्वान्न दुःखहेतुत्वमित्यर्थः ॥ २५ ॥

---

१. 'णाल्पमल्प का' खपुस्तके पाठः २. 'खदुःखभोक्तृत्वम् । यत्र तु तद्भोक्तृत्वं, तत्र कर्मपरामर्शो रम' खपुस्तके पाठः,

किञ्च—

रेतस्सिग्योगोऽथ ॥ २६ ॥

अथ व्रीह्यादिभावानन्तरमनुशयिनां रेतः सिञ्चतीति रेतस्सिक् तद्योगस्तद्भावः 'यो रेतः सिञ्चति तद्भूय एव भवति' (छा. ५-१०-६) इति श्रुतावाम्नायते । न ह्यत्रानुशयिनां रेतस्सिग्भावो मुख्यः सम्भवति इदानीं पुरुषं प्रविष्टत्वेनाप्राप्तयौवनत्वात् । अतः तद्भावः तत्संसर्गो वाच्यः । तथा व्रीह्यादावपि संसर्ग एव । आकाशादावपि ससर्गस्यैवावगतत्वेन सन्दशन्यायादिति भावः ॥ २६ ॥

नन्वनुशयिनां सर्वत्र ससर्गस्यैवाङ्गीकारे मुख्यजन्म क्वापि न स्यादित्यत आह—

योनेः शरीरम् ॥ २७ ॥

योनौ रेतसि निषिक्ते ततः सुखदुःखोपभोगयोग्यं कर्मोपार्जितं शरीरमनुशयिना जायत इति 'रमणीयचरणा' (छा. ५-१०-७) इत्यादिशास्त्रमाह । तस्माद् ब्राह्मणादियोनावेवानुशयिना मुख्यजन्म न व्रीह्यादाविति गत्यागतिविवेककृतं वैराग्यं ज्ञानसाधनमित्यनवद्यम् ॥ २७ ॥

अस्मिन् पादे षडधिकरणानि । सूत्राणि सप्तविंशतिः ।

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**
तृतीयाध्यायस्य प्रथमः पादः ।

---

## अथ द्वितीयः पादः ।

* १ सन्ध्याधिकरणम् *

**इत्थं** गत्यागतिनिरूपणेन कर्मफलेभ्यो विरक्तस्य महावाक्यार्थज्ञानाय तत्त्वंपदार्थावस्मिन् पादे शोध्येते इति हेतुहेतुमद्भावसङ्गत्या द्वितीयः पाद आरभ्यते। तत्र पूर्वं गत्यादिचिन्तया जाग्रदवस्था निरूपिता । तदनन्तरं त्वंपदार्थस्य स्वयंज्योतिष्ट्वसिद्धये स्वप्नावस्थां निरूपयितुमिदमाह—

सन्ध्ये सृष्टिराह हि ॥ १ ॥

पादान्तरत्वादव्यवहिताधिकरणेनास्य न सङ्गत्यपेक्षा । अत्र पूर्वपक्षे व्यावहारिकस्वप्नावस्थातो जीवस्य पृथक्करणायोगात् स्वयंज्योतिष्ट्वासिद्धिः, सिद्धान्ते

तद्योगात् तत्सिद्धिरिति फलभेदः। एवं हि स्वप्नमधिकृत्य श्रूयते—'अथ रथान् रथयोगान् पथः सृजते' (बृ ४-३-१०) इति। तत्र किं स्वप्नसृष्टिर्व्यावहारिकी उत मायामात्रमिति सन्देहे पूर्वः पक्षः—सन्ध्ये जाग्रत्सुषुप्त्योः सन्धौ भवे स्वप्ने सृष्टिर्व्यावहारिकी, हि यस्माद् 'अथ रथान्' इत्यादिका श्रुतिरेवमाह ॥ १ ॥

किञ्च—

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

एके शाखिनोऽस्मिन्नेव[1] स्वप्ने कामानां निर्मातारमीश्वरमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क. ५-८) इति। पुत्रादयश्च तत्र कामा अभिधीयन्ते काम्यन्त इति। एवं च स्वप्नसृष्टिर्व्यावहारिकी ईश्वरकर्तृकत्वात् क्षित्यादिवदित्यनुमानमनेन सूत्रेण सूचितम्। तस्मात् पूर्वोदाहृतश्रुत्यैतद'नुमानेन च स्वप्नसृष्टिर्व्यावहारिकीति सिद्धम् ॥ २ ॥

एवं पूर्वपक्षे सिद्धान्तः—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुः पूर्वपक्षनिरासार्थः। स्वप्नसृष्टिः शुक्तिरूप्यवन्मायामात्रं, कुतः, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। न हि कार्त्स्न्येन देशकालादिसम्पत्त्यबाधरूपपरमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः। अतस्तादृशधर्मेणानभिव्यक्तस्वरूपत्वात् प्रातिभासिक एव स्वप्नः। यदुक्तम् 'अथ रथान् रथयोगान् पथः सृजते' (बृ. ४-३-१०) इति, तच्च 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' (बृ. ४-३-१०) इत्येवमादिकया श्रुत्यैव परिहृतम्। यच्चानुमानमुक्तं, तत्रोचितदेशकालादिजन्यत्वमुपाधिः। हेत्वसिद्धिश्च 'स्वयं विहत्य स्वयं निर्माय' (बृ. ४-३-९) इत्यादिना श्रुत्यन्तरेण स्वप्नसृष्टेर्जीवकर्तृकत्वश्रवणात्। अतः स्वप्नसृष्टिर्मिथ्येति सिद्धम् ॥ ३ ॥

ननु स्वप्नस्य मिथ्यात्वे तत्सूचितोऽप्यर्थः सत्यो न स्यादित्यत आह[2]—

## सूचकश्च हि श्रुतेराचक्षते हि तद्विदः ॥ ४ ॥

स्वप्ने जायमानः स्त्रीदर्शनादिः सत्य एव। स च सत्यस्य साध्वसाधुवस्तुनः सूचको हेतुः। तथा हि—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।

---

१. 'अस्मिन्' इत्यतः प्राग् 'जीववत् तथा' इति कपुस्तके पठ्यते। तत्स्थाने 'जीवार्थतया' इति वा 'जागरितवद्' इति वा पाठ. स्यादिति भाति. २. 'त्याशङ्क्याह' खपुस्तके पाठः.

समृद्धिं तत्र जानीयाद्' (छा. ५-२ ८) इत्यादिश्रुतेरवगम्यते । आचक्षते च स्वप्नाध्यायविदः शुभाशुभसूचकत्वं स्वप्नदर्शनस्य । वस्तुतस्तु दर्शनस्य स्त्र्याद्यर्थरूषितत्वेनासत्यत्वेऽपि शुक्तिरूप्यविज्ञानस्य सत्यहर्षादिजनकत्ववत् सत्यशुभादिसूचकत्वमविरुद्धमिति भावः ॥ ४ ॥

ननु पूर्वमुचितदेशादिनिमित्ताभावात् स्वप्नो मायेत्युक्तमयुक्तम् ऐश्वर्ययोगात् सङ्कल्पमात्रेणापि सत्यसृष्टिसम्भवादित्याशङ्क्याह —

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

अस्य जीवस्य तिरोहितमैश्वर्यं परस्येश्वरस्याभिध्यानाद् आभिमुख्येन ध्यानादभिव्यक्तं भवति, कुतः, ततस्तस्मादज्ञातादीश्वराद्बन्धः, ज्ञाताद्विपर्ययो मोक्ष इति 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात् तृतीय देहभेदे विश्वैश्वर्यं केवल आप्तकामः' (श्वे. १-११) इति श्रुतिर्दर्शयति । एवञ्च जीवेश्वरयोरभेदेऽप्यैश्वर्यस्य तिरोहितत्वान्न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमिति भावः ॥ ५ ॥

ननु जीवस्यैश्वर्यतिरोभावे को हेतुरित्याशङ्क्याह —

**देहयोगाद्वा सोऽपि ॥ ६ ॥**

सोऽपि जीवस्यैश्वर्यस्य तिरोभावः देहयोगाद् देहादावात्मत्वाभिमानलक्षणाविद्यावशाद् यथा भस्मयोगाद्वह्नेः प्रकाशनशक्तितिरोभावस्तद्वदित्यर्थः । वाशब्द ईश्वरत्वासम्भवशङ्कानिरासार्थः, अभेदस्याम्नायसहस्रप्रसिद्धत्वात् । अतः स्वप्नप्रपञ्चस्य मायामात्रत्वेन ततो विनिर्मुक्तस्य जीवस्य स्वयंज्योतिष्ट्वसिद्धिरिति ॥ ६ ॥

* २ तदभावाधिकरणम् *

इत्थं बाह्यकरणोपरमरूपं स्वप्नं जीवस्य स्वयंज्योतिष्ट्वार्थं विचार्यान्तःकरणोपरमरूपां सुषुप्तिं प्रतियोग्यनुयोगिभावसङ्गत्या विचारयति —

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

अत्र पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मैक्यानिर्णयः, सिद्धान्ते स्थानसमुच्चयात् तन्निर्णय इति फलभेदः । अत्र सुषुप्तिवाक्यानि विप्रतिपन्नानि दृश्यन्ते । 'आसु तदा नाडीषु सृप्तो भवति' (छा. ८-६-३) इति सुषुप्तिकाले नाडीप्रवेशः

१. 'यैति' खपुस्तके पाठः.

श्रूयते, क्वचित् 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ. २-१-१९) इति, क्वचित् 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ. २-१-१७) इति । तत्र किं जीवस्य नाडीपुरीतत्परमात्मनां मध्ये यत्र क्वचित् सुषुप्तिरिति विकल्प उत नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येव समुच्चय इति संशये एकफलत्वाद्व्रीह्यादिवद् विकल्प इति पूर्वः पक्षः । सिद्धान्तस्तु तदभावः स्वप्नाभावः सुषुप्तिर्नाडीष्वात्मनि चेति नाड्यादीनां समुच्चय एव न विकल्पः । स च समुच्चयो नाडीपुरीतत्प्रवेशं विना सम्पत्तेरभावान्नाडीपुरीततोर्गुणभूततया परमात्मनः प्राधान्येनावगन्तव्यः, कुतः, तच्छ्रुतेः, तस्य नाड्यादीनां सुषुप्तिस्थानत्वस्य श्रुतत्वात् । उक्तसमुच्चयानङ्गीकारे श्रुतीनां संग्रहो न स्यादिति भावः ॥ ७ ॥

किञ्च—

अतः प्रबोधोऽस्मात् ॥ ८ ॥

यतः परमात्मैव सुषुप्तिस्थानम्, अत एव हेतोरस्मात् परमात्मनो जीवस्य प्रबोध उपदिश्यते 'सत आगम्य न विदुः सत आगच्छामहे' (छा. ६-१०-२) इति सद्रूपात् परमात्मनः सकाशाज्जीवा आगच्छन्तीति श्रवणात् । अन्यस्य सुषुप्तिस्थानत्व इदं श्रवणं बाध्येत अन्यत्र सुषुप्तस्यान्यस्मात् समुत्थानायोगादिति भावः । तस्मात् सुषुप्तौ मिथ्याज्ञानाभावमात्रेण ब्रह्मसम्पत्तेः सत्त्वान्मूलाज्ञाननिवृत्तौ साकल्येन ब्रह्मसम्पत्तिरविरुद्धेत्यस्ति जीवस्य ब्रह्मैक्यमिति सिद्धम् ॥ ८ ॥

* ३ कर्मानुस्मृत्यधिकरणम् *

पूर्वं सुषुप्त्यन्ते परमात्मनः सकाशाज्जीवोत्थानश्रुतेः परमात्मैव सुषुप्तिस्थानमित्युक्तमयुक्तं सुप्तादन्यस्य प्रबोधसम्भवेन सुप्तस्य[1] नाड्यादिस्थानत्वसम्भवादित्याक्षेपसङ्गत्येदमाह—

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अत्र पूर्वपक्षे सुप्तस्यैवापुनरावृत्तिरूपमुक्तिसिद्धौ ज्ञानवैयर्थ्यं, सिद्धान्ते त्वज्ञातब्रह्मात्मना स्थितस्याज्ञानबलेन तस्यैवोत्थानावश्यम्भावादज्ञाननाशाय ज्ञानसार्थक्यमिति फलभेदः । तत्र यः सुप्तो जीवः स एव प्रतिबुध्यते उत स एवान्यो वेत्यनियम इति संशये अनियम इति पूर्वः पक्षः । सिद्धान्तस्तु यः सुप्तो जीवः स एव प्रतिबुध्यते नान्यः, कुतः, कर्मानुस्मृतिशब्दविधिभ्यः पञ्चभ्यो हेतुभ्यः । दि-

१. 'सुषुप्त' खपुस्तके पाठः.

नद्वयसाध्यस्य कर्मणोऽर्धं कृत्वा सुप्तः पुनरुत्थायावशिष्टमर्धं करोति । अनुशब्देन प्रत्यभिज्ञा सूच्यते 'योऽहमतीतेऽप्यहनि घटमद्राक्षं, स एवैतर्हि स्पृशामी'त्याद्याकारा । पश्चात् स घट इत्यादिस्मरणं स्मृतिशब्देनोच्यते । 'पुनः प्रतिन्याय प्रतियोन्याद्रवति बुद्धान्तायैव' (बृ. ४-३-१६) इत्यादिश्रुतिसमूहः शब्दशब्देनोच्यते । कर्मविद्याविषयो विधिशब्देनोच्यन्ते । यदि सुप्तस्य पुनर्नोत्थानं तद्युक्तहेतवो बाध्येरन् । अतः सुप्त एवोत्तिष्ठतीति सिद्धम् ॥ ९ ॥

* ४ मुग्धाधिकरणम् *

पूर्वं सोऽहमिति प्रत्यभिज्ञानाज्जीवस्य सुषुप्तप्रतिबुद्धैक्यमुक्तम् । तद्वद्विशेषाभावप्रत्यभिज्ञानात् सुषुप्तिरेव मूर्छेति दृष्टान्तसङ्गत्येदमाह—

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

अत्र पूर्वपक्षे मूर्च्छातिरेकार्थं न पृथक् प्रयतितव्यं, सिद्धान्ते तु प्रयतितव्यमिति फलभेदः । अत्र मूर्च्छावस्था सुषुप्त्यन्तर्गता, उतातिरिक्तेति सन्देहे सुषुप्त्यन्तर्गतेति पूर्वः पक्षः । सिद्धान्तस्तु न तावत् स्वप्नजागरिते मूर्छावस्था, तत्र ज्ञानाभावात् । नापि मरणावस्था, प्राणोष्मणोः सत्त्वात् । नापि सुषुप्तिः, भयानकवदनवत्त्वादिलक्षणभेदात् । किन्तु परिशेषात् प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे वस्तुनि यः संप्रत्ययः स परिशेषः, तस्माद् । मुग्धे मुग्धिर्मूर्च्छावस्था तदवस्थापन्ने विशेषविज्ञानराहित्यादिनार्धेन (सुषुप्ति)धर्मजातेन मूर्च्छावस्थाया. सम्पन्नत्वादर्धेन कम्पनादिना मरणावस्थाधर्मजातेन च युक्तत्वादर्धसम्पत्तिर्मूर्च्छावस्था सुषुप्तिव्यतिरिक्तैवेत्यनवद्यम् ॥ १० ॥

* ५ उभयलिङ्गाधिकरणम् *

इत्थं चतुर्भिरधिकरणैरुद्देश्यत्वेन प्रथमजिज्ञास्यं त्वपदार्थं स्वप्रकाशचिदेकरसं सर्वावस्थाविनिर्मुक्त निर्विशेषं संशोध्य तज्जिज्ञासोपरमानन्तरमवसरसङ्गत्या विधेयत्वेन जिज्ञास्यं तत्पदार्थं शोधयितुं पादशेषमारभमाणो मूर्च्छावस्थाया विरुद्धसुषुप्तिमरणावस्थोभयधर्मवत्त्ववद् ब्रह्मणोऽप्युभयरूपत्वं भवत्विति दृष्टान्तावान्तरसङ्गत्येदमाह—

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

१. 'ककम्पनव' खपुस्तके पाठः. २ 'वत् परत्र' खपुस्तके पाठ ३. 'त्वमस्त्विति' खपुस्तके पाठः.

अत्र पूर्वपक्षे द्विरूपं ब्रह्म ध्येयं सिद्धान्ते निर्विशेषमिति फलभेदः। अत्र 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा. ३-१४-२) इत्यादिना ब्रह्मणः सविशेषत्वं श्रूयते, 'अस्थूलमनणु' (बृ. ३-८-८) इत्यादिना निर्विशेषत्वम्। तत्र किमुभयश्रुत्यनुरोधादुभयरूपं ब्रह्म, उतैकरूपम्। एकरूपमित्यत्रापि सविशेषं निर्विशेषं वेति सन्देहे द्विरूपमिति पूर्वः पक्षः। सिद्धान्तस्तु न तावत् परस्य ब्रह्मण उभयलिङ्गमुभयरूपत्वं सम्भवति, सत्यस्य वस्तुनो द्वैरूप्यायोगात्। न ह्येकमेव वस्त्वेकदा तद्वत् तदभाववच्च दृष्टम्। एतेन मूर्च्छावस्थादृष्टान्तो वैलक्षण्यान्निरस्तः। नापि स्थानत उपाधित उभयरूपत्वं तात्त्विक युक्तम् अग्निसंयोगमात्रेण जलस्योष्णस्य तत्स्वभावत्वादर्शनात्। अत एकरूपत्वमेव ब्रह्मणः। हि यस्मात् सर्वत्र सर्वेषु वेदान्तेषु 'अशब्दमस्पर्शमरूपम्' (क. ३-१९. मुक्ति. २-७२) इत्यादिषु ब्रह्मपरेषु सविशेषत्वनिरासेन निर्विशेषमेवैकरूपं ब्रह्मोपदिश्यत इत्यर्थः॥ ११॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात्॥ १२॥

ननु न निर्विशेषमेव ब्रह्म, कुतः, भेदात् प्रतिविद्य ब्रह्मण आकारभेदेन भेदात् कस्याञ्चित् विद्यायां चतुष्पाद् ब्रह्मोपदिश्यते, कस्याञ्चित षोडशकलं, कस्याञ्चित् त्रैलोक्यशरीरं वैश्वानराख्यम्। तस्मात् सविशेषमपि श्रुतिसामर्थ्यादङ्गीकर्तव्यमितिचेन्न, प्रत्येकं प्रत्युपाध्यतद्वचनादभेदवचनात्। 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः' (बृ. २-५-१) इत्यादिश्रुतौ ब्रह्मणः सर्वोपाधिषु पृथिव्यबादिष्वभेदश्रवणादित्यर्थः॥ १२॥

## अपि चैवमेके॥ १३॥

अपि चैके शाखिनः 'मृत्युमाप्नोति य इह नानेव पश्यति' 'नेह नानास्ति किञ्चन' (क. ४-११) इत्येवं भेदनिन्दापूर्वकमभेदमेव ब्रह्मणः समामनन्तीत्यर्थः॥ १३॥

ननु सगुणनिर्गुणपरश्रुतिद्वये सति कथं निर्गुणे ब्रह्मणि पक्षपातः। तत्राह—

## अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥

रूपहीनं निर्विशेषमेव ब्रह्मावधारयितव्यं न सविशेषं, कुतः, 'अस्थूलमि'

१ 'षमेवेति' खपुस्तके पाठः. २ 'न चैक' खपुस्तके पाठः.

त्यादिनिषेधशास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः । उपासनावाक्यानां सविशेषत्वे तात्पर्याभावात् तत्तात्पर्याङ्गीकारे वाक्यभेदापत्तेः इतरेषां सविशेषवाक्यानां प्रत्यक्षादिसिद्धप्रपञ्चानुवादकत्वेन निर्विशेषपरत्वात् 'तदन्यत्वम्' (२-१-१४) इत्यादिना प्रपञ्चमिथ्यात्वसाधनाच्च न सविशेषत्वं ब्रह्मणः प्रामाणिकमिति भावः ॥ १४ ॥

ननु तर्हि सविशेषश्रुतीनां का गतिरित्यत आह—

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

यथा सूर्यादिप्रकाशो वक्रवंशाद्युपाधिना वक्र इव ऋजुरिव भवति, तद्वद् ब्रह्मापि पृथिव्याद्युपाधिवशात् तत्तदाकारमिव भवति । तादृशौपाधिकाकारः सविशेषश्रुतीनां गतिरिति तासामवैयर्थ्यं निरर्थकत्वाभाव इत्यर्थः ॥ १५ ॥

ननु कीदृशं निर्विशेषं ब्रह्मेत्यत आह—

## आह च तन्मात्रम् ॥ १६ ॥

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. ४-५-१३) इति श्रुतिस्तन्मात्रं चैतन्यमात्रं स्वप्रकाशचिदेकरसं निर्विशेषमाहेत्यर्थः ॥ १६ ॥

किञ्च प्रपञ्चप्रत्याख्यानमुखेन ब्रह्मण उपदेशादपि ब्रह्म निर्विशेषमेव । सविशेषत्वे तद्वाक्यैरेव तत्सिद्धेः प्रत्याख्यानोपदेशानर्थक्यं स्यादित्याह—

## दर्शयति चाथो अपि (च?) स्मर्यते ॥ १७ ॥

'अथात आदेशो नेति नेति' (बृ. २-३-६) इत्यादिश्रुतिः प्रपञ्चनिषेधमुखेनैव ब्रह्म दर्शयति । सौत्राथोशब्दस्तथार्थः । तथा स्मर्यते च भगवद्गीतासु निषेधमुखेन ब्रह्म 'अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते' (गीता. १३-१२) इति ॥ १७ ॥

किञ्च विशिष्टदृष्टान्तोक्तिरपि निर्वेशेषत्वमस्य गमयतीत्याह—

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यत एवायमात्मा चैतन्यैकरसः परप्रतिषेधोपदेश्यो निर्विशेषः, अत एवौ-

---

१. 'णप्रथा' क पुस्तके पाठः. २. 'त्यायां श्रु' खपुस्तके पाठः.

पाधिकं सविशेषत्वमादाय सूर्यकादिवत् जलगतसूर्यप्रतिबिम्बवदित्युपमोपादीयते मोक्षशास्त्रेषु—

'यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' (ब्र. विं. १२)

इत्यादिषु। एवं चैतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्राभिप्रायः ॥ १८ ॥

दृष्टान्तवैषम्य शङ्कते—

## अम्बुवदग्रहणात् तु न तथात्वम् ॥ १९ ॥

यथाम्बु सूर्यान्मूर्ताद् भिन्नं दूरस्थं मूर्तं गृह्यते तद्वदमूर्तात् सर्वात्मकादात्मनो भिन्नदूरस्थोपाधेरग्रहणान्न तथात्वं न सूर्यतुल्यत्वमिति शङ्कार्थः ॥ १९ ॥

अत्रोत्तरमाह—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

यथा सूर्यप्रतिबिम्बस्य जलान्तर्भूतस्य जलगतवृद्धिह्रासभाक्त्वं न वास्तवम्, एवं निर्विशेषस्य परमात्मनो देहाद्युपाध्यन्तर्भावाद् देहादिगतवृद्धिह्रासभाक्त्वं न स्वाभाविकमित्येतावतांशेनोभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्याद् भवति सूर्यादिदृष्टान्तः । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन समत्वं शक्यते शक्रेणापि वक्तुं, तत्त्वे तदुच्छेदादिति भावः ॥ २० ॥

किञ्चागमैकसमाधिगम्येऽर्थे न पर्यनुयोग इत्याह—

## दर्शनाच्च ॥ २१ ॥

परस्य ब्रह्मणो देहान्तरानुप्रवेशस्य प्रतिबिम्बभावरूपस्य

'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशद् ॥' (बृ. २-५-१८)

इत्यादिश्रुतौ दर्शनात् । अतो निर्विशेषमेव चैतन्यैकरसं ब्रह्मेति सिद्धम् ॥ २१ ॥

* ६ प्रकृतैतावत्त्वाधिकरणम् *

पूर्वं निषेधश्रुतिभिर्ब्रह्म निर्विशेषं सिध्यतीत्युक्तमयुक्तं ताभिर्ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेपसङ्गत्येदमाह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

---

१. 'क्तम् । तद्यु' खपुस्तके पाठः. २. 'णो निषेधसत्त्वादि' कपुस्तके पाठः.

अत्र पूर्वपक्षे ब्रह्मासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' (बृ. २-३-१) इत्युपक्रम्य 'अथात आदेशो नेति नेति' (बृ. २-३-६) इति श्रूयते । तत्र किं प्रपञ्चो ब्रह्म चेत्युभयमपि निषिध्यते उतैकम्, एकमित्यत्रापि प्रपञ्चो ब्रह्म वेति सन्देहे नियामकाभावादुभयमपीति पूर्वः पक्षः । अथवा प्रपञ्चस्य प्रत्यक्षत्वेन निषेधासम्भवान्निरवधिकानिषेधायोगादेकं ब्रह्मैव निषिध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु प्रकृतं प्रधानमेतावत्त्वमियत्तापरिच्छिन्नं यद् ब्रह्मणो रूपद्वयं तत् प्रकृतैतावत्त्वम्, तदेव प्रतिषेधति 'नेति नेति' इत्यादिश्रुतिः, इतिशब्दस्य प्रधानत्वेन प्रकृतपरामर्शित्वात् । ब्रह्म तु न प्रधानत्वेन प्रकृत 'द्वे वाव ब्रह्मणो रूपे' (बृ. २-३-१) इति रूपद्वयात्मकजगदुपसर्जनत्वेनैवाभिहितत्वात् । इतश्च ब्रह्मणो न निषेधः, हि यस्मात् ततः प्रपञ्चनिषेधानन्तरं भूयो 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'ति एतस्मान्नेति नेत्यादिष्टाद् ब्रह्मणोऽन्यद्व्यतिरिक्तं नास्ति, ब्रह्मैव तु परमस्तीत्येतन्निर्वचनवाक्यं ब्रवीति । यद्वा ततः प्रपञ्चनिषेधस्य परस्ताद् 'अथ नामधेयम्' (२-१-२०) इत्यादिवाक्यं ब्रह्म ब्रवीतीत्यर्थः । न च प्रपञ्चनिषेधे प्रत्यक्षविरोधः, तस्य व्यावहारिकप्रामाण्यादित्यनवद्यम् ॥ २२ ॥

ननु यदि ब्रह्मास्ति तर्ह्युपलभ्येतेति[1] । तत्राह—

## तदव्यक्तमाह हि ॥ २३ ॥

तद् ब्रह्म अव्यक्तं न व्यज्यत इत्यव्यक्तं प्रत्यक्षाद्यगोचरं, हि यतः 'न चक्षुषा गृह्यते नापि वाचा' (मु. ३-१-८) इत्यादिश्रुतिराहेत्यर्थः ॥ २३ ॥

तर्हि सर्वदा ब्रह्मग्रहणाभावे मोक्षो न स्यादित्यत आह—

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपि चैनं परमात्मान संराधने समाध्यवस्थायां कृतार्थः पश्यतीति प्रत्यक्षानुमानाभ्यां —

'कश्चिद्धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन् ।' (क. ४-१)

इत्यात्मिका श्रुतिः,

'यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥'

इति स्मृतिः, ताभ्यामवगम्यत इत्यर्थः ॥ २४ ॥

---

१. 'लभ्येत । त' ख पुस्तके पाठः.

ननु जीवब्रह्मणोर्ध्यातृध्येयभावाङ्गीकारे भेदः स्यादित्याशङ्क्याह—

**प्रकाशवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥**

यथा सौरः प्रकाशोऽङ्गुल्याद्युपाधौ कर्मणि भिन्न इव प्रतिभाति, वस्तुतस्त्वेकरूपः, तद्वत् प्रकाशः परमात्मापि ध्यानाद्युपाधौ कर्मणि भिन्न इव भाति, वस्तुतस्त्ववैशेष्यमेकरूपत्वमात्मनः। कुतः, अभ्यासात् 'तत्त्वमसी'त्याद्यभेदश्रुत्यभ्यासादित्यर्थः ॥ २५ ॥

किञ्च—

**अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥**

अतश्च भेदस्यौपाधिकत्वाद्विद्यया भेदं विधूय जीवोऽनन्तेन परमात्मनैकतां गच्छति। तथा हि लिङ्गं 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मु. ३-२-९) इत्याद्यपूर्वार्थज्ञापकमित्यर्थः ॥ २६ ॥

इत्थं जीवब्रह्मणोः पारमार्थिकाभेदमभिधाय स्वमतपरिशुद्धये भेदाभेदवादमुपन्यस्यति—

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥**

ध्यातृध्येयभावादिना भेदस्याभेदस्य च श्रुतौ व्यपदेशाद् जीवेश्वरयोर्भेदाभेदौ भवतः। तुशब्दः सिद्धान्तवैषम्यद्योतनार्थः। अहिकुण्डलवद् अहेः संस्थानविशेषो हि कुण्डलं, तयोरहित्वेनाभेदः कुण्डलत्वेन भेदो यथा, तद्वदित्यर्थः ॥ २७ ॥

धर्मभेदेन भेदाभेदाविति पक्षमभिधायैकधर्मावच्छेदेनैव भेदाभेदाविति पक्षान्तरमाह—

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥**

यथा सावित्रः प्रकाशस्तदाश्रयश्च सविता, तयोर्नात्यन्तभेदस्तेजस्त्वाविशेषात्, तथापि भेदश्च प्रतीयते, एवं चैकतेजस्त्वावच्छेदेनैव प्रमाणबलाद् भेदाभेदौ, तद्वज्जीवेश्वरयोर्भेदाभेदावित्यर्थः ॥ २८ ॥

ननु भेदस्य पारमार्थिकत्वे ज्ञाननिवर्त्यत्वासम्भवान्मोक्षो न स्यात्। एकधर्मावच्छेदेन भेदाभेदयोरेकत्राङ्गीकाराल्लोके विरोधकथैव न स्यादित्यादिदोषजातं परमते मत्वा निरवद्यं स्वसिद्धान्तमाह—

**पूर्ववद्वा ॥ २९ ॥**

---

१. 'शादिवच्चा' इति तु मुद्रितपुस्तकेषु पाठो दृश्यते.

'प्रकाशवच्चावैशेष्यम्' (३-२-२९) इत्यत्र पूर्वं भेदः काल्पनिकः, अभेदः पारमार्थिक इति यदुक्तं स एव सिद्धान्तोऽभ्युपेयः ॥ २९ ॥

किञ्च—

## प्रतिषेधाच्च ॥ ३० ॥

'नान्योऽतोऽस्ति द्रष्टा' (बृ. ३-७-२३) इत्यादिशास्त्रेण परमार्थव्यतिरिक्तस्य चेतनस्य 'नेति नेती'त्यादिशास्त्रेण प्रपञ्चस्य च प्रतिषेधाद् ब्रह्माद्वितीयमित्ययमेव सिद्धान्तः । तस्माच्छ्रुतिबलान्निर्विशेषमेकमेव ब्रह्मेति सिद्धम् ॥ ३० ॥

७ सेतून्मानाधिकरणम् *

पूर्वं 'नेति नेती'ति ब्रह्मातिरिक्तं वस्तु निषेध्यमित्युक्तमयुक्तं ब्रह्मणः सेतुत्वोन्मानादिव्यपदेशेन वस्त्वन्तरसत्त्वावगमाद्[1] द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽप्युन्मानादीनां गतेरदर्शनादित्याक्षेपसङ्गत्येदमाह—

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

अत्र पूर्वपक्ष उन्मानादिश्रुतीनां मुख्यत्वात् सविशेषं ब्रह्मेति फलं, सिद्धान्ते तूक्ताद्वितीयब्रह्मसिद्धिरिति विवेकः । अत्र ब्रह्मातिरिक्तं वस्त्वस्ति न वेति सन्देहे पूर्वः पक्षः । अतोऽस्माद् ब्रह्मणः सकाशात् परं वस्त्वस्ति, 'अथ य आत्मा स सेतुः' (छा. ८-४-१) इति ब्रह्मणः सेतुत्वव्यपदेशात्, तथा 'ब्रह्म चतुष्पाद्' (छा. ३-१८-२) इति श्रुतावुन्मानव्यपदेशादेतावदिदमिति परिच्छिन्नत्वव्यपदेशात्, सुषुप्तौ 'प्राज्ञेनात्मना शारीर[2] सम्परिष्वक्तः' (बृ. ४-३-२१) इत्यादिना ब्रह्मणः सम्बन्धव्यपदेशाद्, आदित्ये हिरण्मयं पुरुषमीश्वरं व्यपदिश्य ततो भेदेनाक्षिस्थपुरुषस्य व्यपदेशात् साद्वितीयं ब्रह्मेति सिद्धम् ॥ ३१ ॥

एवं पूर्वपक्षे सिद्धान्तः—

## सामान्यात्तु ॥ ३२ ॥

तुशब्दः पूर्वपक्षनिरासार्थः । मृद्दार्वादिमये हि सेतुशब्दो रूढो लोके । न हि ब्रह्मणस्तादृशं सेतुत्वमस्ति । यथा सेतोर्जलव्यवस्थापकत्वम् एवं ब्रह्मणोऽपि जगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामान्यात् साम्यात् सेतुत्वव्यपदेश इत्यर्थः ॥ ३२ ॥

उन्मानव्यपदेशोऽपि न मुख्य इत्याह—

---

१. 'द्युभ्वोप्रथमात्' कपुस्तके पाठः  २. शारीर इति पद मुद्रितोपनिषदादौ न दृश्यते,

## बुद्ध्यर्थः पादवत् ॥ ३३ ॥

'ब्रह्म चतुष्पाद्' (छा. ३-१८-२) इति श्रुतावुन्मानव्यपदेशो बुद्ध्यर्थ उपासनार्थः। निर्विशेषस्य बुद्धिस्थत्वायोगादुपाधिकल्पनाद्वारा बुद्धिस्थत्वादस्योन्मानव्यपदेशो न मुख्यः पादवद्, यथा ब्रह्मप्रतीकस्य मनसो वाग्घ्राणचक्षुश्श्रोत्राणामुपासनार्थं पादत्वेन व्यपदेशस्तद्वदित्यर्थः ॥ ३३ ॥

सम्बन्धभेदव्यपदेशावपि न मुख्यावित्याह—

## स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

स्थानविशेषात्, स्थानमुपाधिबुद्ध्यादि, तद्विशेषात् प्राप्तस्य भेदस्योपाध्युपशमाद्य उपशमः, स एव प्राज्ञेनात्मना जीवस्य सुषुप्तौ सम्बन्ध इत्युपाध्यपेक्षयोपचर्यते। अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेषापेक्षयोपचर्यते प्रकाशादिवद्, यथा सौरालोकादेरङ्गुल्याद्युपाधियोगादुपजातभेदस्योपाध्युपशमात् सम्बन्धव्यपदेश उपाधिभेदाच्च भेदव्यपदेशः, तद्वदित्यर्थः ॥ ३४ ॥

ननु मुख्यावेव सम्बन्धभेदौ किं न स्यातामित्यत आह—

## उपपत्तेश्च ॥ ३५ ॥

न मुख्यः सम्बन्धो जीवपरयोः सुषुप्तौ भवति 'स्वमपीतो भवति' (छा. ६-८-१) इति स्वरूपस्यैव सम्बन्धत्वव्यपदेशोपपत्तेः, तथा भेदोऽपि न मुख्यः श्रुतिसहस्रविरोधादित्युपपत्तेश्चेत्यर्थः ॥ ३५ ॥

इत्थं सेतुत्वादीन् हेतून् निराकृत्य ब्रह्मणोऽद्वितीयत्वं हेत्वन्तरेणाह—

## तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा सेतुत्वादिहेतुभ्यो न वस्त्वन्तरप्रतिपत्तिः, तथा 'आत्मैवाधस्तात्' (छा. ७-२५-२) इत्यादिवाक्यैरन्यस्य वस्तुनः प्रतिषेधादद्वितीयमेव ब्रह्मेत्यर्थः ॥ ३६ ॥

ननु ब्रह्मणोऽद्वितीयत्वे कथं सर्वगतत्वमत आह—

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

अनेन सेतुत्वादिव्यपदेशे मुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणः सर्वगतत्वं सिद्धम्। अप्रतिषेधे प्रसिद्धसेतुवद् ब्रह्मणोऽसर्वगतत्वं प्रसज्येत। कस्मात् पुनः सर्वगतत्वम्। आयामशब्दादिभ्यः। आयामशब्दो व्यापकत्ववाचकः

१. 'दिः। त' खपुस्तके पाठः, २. ''रङ्गुल्याद्यु' खपुस्तके पाठः, ३. 'स्मात् स' कपुस्तके पाठः

'आकाशवत् सर्वगतश्च नित्यः' इत्यादिशब्दः । आदिशब्देन 'नित्यः सर्वगतः स्थाणुः (गी. २-२४) इत्यादिरुक्त' । तस्मादद्वितीयस्य ब्रह्मण आविद्यक सर्वमादाय श्रुतिस्मृतिभ्यां सर्वगतत्वं सिद्धम् ॥ ३७ ॥

* ८ फलाधिकरणम् *

**ननु** ब्रह्मातिरिक्तस्य वस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन फलदातृत्वं न स्यादित्याक्षेपसङ्गत्येदमाह—

## फलमत उपपत्तेः ॥ ३८ ॥

अत्र पूर्वपक्षे फलदातुरीश्वरस्य तत्पदवाच्यस्यासिद्धेर्लक्ष्यासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र कि सर्वस्य जन्तो' कर्मण एव फलं भवति उतेश्वरादिति सन्देहे कर्मण इति पूर्वः पक्षः । सिद्धान्तस्तु अतोऽस्मात् परमेश्वरात् फल सर्वस्य जन्तोर्भवितुमर्हति क्षणिकात् कर्मणः फलासम्भवेनेश्वरस्यैव फलदातृत्वोपपत्तेरित्यर्थः ॥ ३८ ॥

## श्रुतत्वाच्च ॥ ३९ ॥

'स वा एष महानज आत्मान्नादो वसुदानः' (बृ. ४-४-२४) इतीश्वरे फलहेतुत्वस्य श्रुतत्वाच्चेश्वरः फलदातेत्यर्थः ॥ ३९ ॥

**शङ्कते—**

## धर्मं जैमिनिरत एव ॥ ४० ॥

यतः श्रुत्युपपत्तिभ्यामीश्वरं फलदातारं मन्यते सिद्धान्ती, अत एव श्रुत्युपपत्तिभ्यां धर्मं फलदातारं जैमिनिराचार्यो मन्यते । तथा हि 'स्वर्गकामो यजेते'ति विधिविषयस्य यागस्य स्वर्गसाधनत्वं श्रुतम् । तन्निर्वाहाय श्रुतिप्रामाण्यादपूर्वाख्यो व्यापारो यागस्योत्तरावस्थारूपः कल्पनीय इति यागादिधर्म एव फलदाता, ईश्वरस्य सर्वसाधारणस्य विचित्रफलदातृत्वानुपपत्तेरिति ॥ ४० ॥

**समाधत्ते—**

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुरुक्तशङ्कानिरासार्थः । पूर्वं पूर्वोक्तमीश्वरं फलदातारं बादरायणस्त्वाचार्यो मन्यते । कर्मापूर्वं वा स्वस्वरूपस्वविनियोगसाक्षात्कारवदधिष्ठितं भवितुमर्हति अचेतनत्वान्मृदादिवदित्यनुमानेन सम्भाविते़ऽर्थे श्रुतिस्मृती प्रमाणयति — हेतुव्य-

१. 'कत्वात्' कपुस्तके पाठः.

पदेशाद् 'एष ह्येव साधु कर्म कारयति' (कौ. ३-८)'अन्नादो वसुदान' (बृ. ४-४-२४) इति श्रुत्या, 'लभते च ततः कामान् मयैव विहितान् हितान्' (गी. ७-२२) इत्यादिस्मृत्या चेश्वरस्य धर्माधर्मयोस्तत्फले च हेतुत्वेन व्यपदेशादिति । अतस्तत्कर्मसापेक्षादीश्वरादेव सर्वेषां फलसिद्धिः । तदेवमधिकरणचतुष्टयेन निर्विशेषस्वप्रकाशो निषेधाविषयोऽद्वितीयः शाखाचन्द्रन्यायेन कर्मफलदातृत्वेनोपलक्षितस्तत्पदार्थः परमात्मा शोधित इति तत्त्वम्पदार्थौ शोधिताविति स्थितम् ॥ ४१ ॥

अस्मिन् पादेऽष्टावधिकरणानि । एकचत्वारिंशत् सूत्राणि ॥

ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
तृतीयाध्यायस्य द्वितीय पाद. ।

---

## अथ तृतीयः पादः ।

* १ सर्ववेदान्तप्रत्ययाधिकरणम् *

इत्थं पूर्वपादे वाक्यार्थज्ञानकरणभूततत्त्वम्पदार्थनिरूपणमकारि । अधुना वाक्यार्थो निर्धार्यत इति हेतुहेतुमद्भावसङ्गत्यायं तृतीयपाद आरभ्यते । सगुणविद्यायाश्चित्तैकाग्र्यद्वारा निर्गुणवाक्यार्थज्ञानोपयोगित्वात् तद्वाक्यार्थज्ञानचिन्ता क्रियत इति मन्तव्यम् । तत्र तावत् पञ्चाग्निप्राणदहरशाण्डिल्यवैश्वनरोपासनास्वरूपमाह—

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

अस्य पादान्तरत्वान्नाव्यवहिताधिकरणेन सङ्गत्यपेक्षा । अत्र पूर्वपक्षे उपासनाभेदाद्गुणानुपसंहारः, सिद्धान्ते त्वभेदाद्गुपसंहार इति फलभेदः । अत्रे तूक्तोपासनानि किं प्रतिशाखं भिद्यन्ते, उत नेति सन्देहे नामरूपादिभेदाद् भिद्यन्त इति पूर्वः पक्षः । सिद्धान्तस्तु सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते, कुतः, चोदनाद्यविशेषाद् , आदिपदेन कर्माभेदहेतुत्वेनोपन्यस्ताः संयोगरूपसमाख्या गृह्यन्ते, चोदनासंयोगरूपसमाख्यानामविशेषात् । तत्र यथा सर्वशाखासु 'अग्निहोत्रं जुहुयात्' (मै. ६-३६) इति चोदनाया अविशेषान्नित्याग्निहोत्रमेकमेव, तथा 'यो ह वै ज्येष्ठं च श्रेष्ठं च प्राणं वेद' (बृ. ६-१-१ । छा. ५-१-१) इत्यादिचोदनायाश्छन्दोगानां वाजसनेयिनां चाविशिष्टत्वादेकैव प्राणविद्या सर्वेषां शाखिनामिति

---

१. 'सिद्धम्' खपुस्तके पाठः. २ 'त्र चोक्तो' ख पुस्तके पाठः. ३. 'प्राणं' इति पूर्वं मुद्रितोपनिषदादौ न दृश्यते.

गम्यते । यः प्राणोपासकः स 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृ. ६-१-१) इति फलसंयोगस्य सर्वत्राविशिष्टत्वाच्च न विद्याभेदः । ज्येष्ठत्वादिगुणकप्राणस्योपास्यरूपस्य सर्वत्राविशिष्टत्वाच्च तथा 'प्राणविद्ये'ति समाख्यायाः सर्वत्राविशिष्टत्वाच्च न विद्याभेद इति सिद्धम् ॥ १ ॥

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

**ननु** वाजसनेयिनः पञ्चाग्निविद्यायां 'तस्याग्निरेवाग्निर्भवति' (बृ. ६-२-१४) इति षष्ठं प्रसिद्धाग्निमुपास्यत्वेनामनन्ति, छन्दोगास्तु 'पञ्चाग्नीन् वेद' (छा. ५-१०-१०) इति । तथा च रूपभेदादामिक्षावाजिनयागयोरिव शाखाद्वये पञ्चाग्निविद्याया भेदान्नैक्यमिति चेन्न, यत एकस्यामपि विद्यायामयं रूपभेद उपपद्यते । तथा हि ये द्युलोकादयः पञ्चाग्नयः वाजसनेयशाखायामुक्ताः, त एव छान्दोग्ये प्रत्यभिज्ञायन्ते । तथा च न विद्याभेदो युक्तः । न च षष्ठाग्नितदभावाभ्या भेदः, एकस्मिन्नेवातिरात्रे षोडशिग्रहणतदभावयोर्दर्शनात् । यद्वानेकगुणप्रत्यभिज्ञानुरोधाच्छान्दोग्ये षष्ठाग्नेरुपसंहारः कर्तव्यः । नचाग्निषु पञ्चत्वसंख्याश्रवणविरोधः, तस्य साम्पादिकाग्निपरत्वादिति भावः ॥ २ ॥

**ननु** ब्रह्मविद्याप्रतिपादकमुण्डकाध्ययने शिरोव्रताख्यधर्मो विहितो, नान्यत्र । अतो धर्मभेदाद्विद्याभेद इत्याशङ्क्याह—

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

स्वाध्यायस्यैव शिरोव्रताख्यधर्मोऽङ्गं, न विद्यायाः । कुतः, तथात्वेन हि, यतः स्वाध्यायाङ्गत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे शिरोव्रतमपि वेदव्रतत्वेनाथर्वणिकाः समामनन्ति । अधिकाराच्च, 'नैतदचीर्णव्रतोऽधीते' (मु. ३-२-११) इत्यत्रत्यादधिकृतविषयादेतच्छब्दात्, चकाराद् 'अधीत' इत्यध्ययनशब्दाच्च शिरोव्रतमध्ययनस्याङ्गम् । तत्र दृष्टान्तः— सववच्च तन्नियमः, यथा सवाः सप्त हौमाः सौर्यादयः शतौदनान्ताः शाखान्तरोक्तत्रेताग्न्यसम्बन्धादाथर्वणोक्तैकाग्निसम्बन्धाच्चैकाग्नीनामाथर्वणिकानामेव नियम्यन्ते, तद्वत् तन्नियमः, मुण्डकाध्ययन एव तस्य शिरोव्रतस्य नियमः । तस्मात् सर्वत्र विद्यैक्यमनवद्यम् ॥ ३ ॥

१. 'गाश्च प' ख पुस्तके पाठः.

किञ्च—

दर्शयति च ॥ ४ ॥

'सर्वे वेदा यत्पदमामनन्ति' (क. २-१५) इति वाक्यं निर्गुणस्य ब्रह्मणो वेद्यस्य सर्ववेदान्तेष्वेकत्वेन तद्विद्यायाः सर्वत्रैकत्वं दर्शयति । तथा वाजसनेयके सगुणस्य ब्रह्मणो वैश्वानरस्य प्रादेशमात्रत्वेन सम्पादितस्य छान्दोग्ये सिद्धवदुपादानं 'यस्त्वेतमेवं प्रादेशमात्रम् अभिविमानमात्मानं वैश्वानरमुपास्ते' (छा. ५-१८-१) इति । तदपि सर्वत्र वैश्वानरविद्याया एकत्वं दर्शयति । एवं च सगुणस्य निर्गुणस्य वा ब्रह्मण एकत्वेन सर्वत्र श्रूयमाणत्वात् तत्तद्विद्याया एकत्वं तथा शस्त्रविशेषरूपोक्थादीनामेकत्वेन सर्वत्र श्रूयमाणत्वात् तदुपासनानामप्यैक्यमिति तत्समभिव्याहारादितरेषामप्युपासनानाममेद इति सिद्धम् ॥ ४ ॥

* २ उपसंहाराधिकरणम् *

पूर्वं सर्वशाखासु विद्यैक्यमेवादि । अधुना तत्फलमुच्यत इति फलफलिभावसङ्गत्येदमाह—

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

अत्र पूर्वपक्षे पूर्वाधिकरणस्य विवक्षितफलासिद्धिः, सिद्धान्ते तस्य तत्सिद्धिरिति फलभेदः । सर्वत्रोपासनानामेकत्वेऽप्येकशाखास्थविद्यायां शाखान्तरस्थायिगुणानामुपसंहारोऽस्ति नवेति सन्देहे यत्र यावन्तो गुणाः श्रुतास्तैरेवाकाङ्क्षाशान्तेर्नोपसंहार इति पूर्वः पक्षः । सिद्धान्तस्तु समान उपासने गुणोपसंहारो युक्तः । कुतः, अर्थाभेदाद् उपास्यगुणैर्निर्वर्त्यस्योपासनरूपार्थस्य सर्वशाखास्वभिन्नत्वात् । तत्र दृष्टान्तः विधिशेषवद्, यथाग्निहोत्रस्य सर्वत्रैक्यात् तच्छेषाणामुपसंहारस्तद्वदित्यर्थः ॥ ५ ॥

* ३ अन्यथात्वाधिकरणम् *

पूर्वं 'चोदनाद्यविशेषाद्' (ब्र. सू. ३-३-१) इत्यत्र समाख्याया अविशेषाद्विद्यैक्यमित्युक्तम् । तद्वत्राप्युद्गीथविद्येति समाख्याया अविशेषाद्विद्यैक्यमेवेति दृष्टान्तसङ्गत्येदमाह—

---

१. 'न विद्याया' ख पुस्तके पाठः २. 'त्वादुपास' ख पुस्तके पाठः.

३. 'मुपापादि' ख पुस्तके पाठः.

## अन्यथात्वं *च शब्दादिति चेन्नाविशेषात् ॥६ ॥

अत्र पूर्वपक्षे मिथो गुणोपसंहारः, सिद्धान्ते विद्यैक्यापवादादनुपसंहार इति फलभेदः । वाजसनेयके पठ्यते 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' (बृ. १-३-७) इति । तथा छान्दोग्येऽपि 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' (छा. १-२-७) इति मुख्यप्राणपरिग्रहः कृत इत्युभयत्रापि प्राणविद्याविधिरवसीयत इति । किमत्र विद्यैक्यम् आहोस्विद्विद्याभेद इति संशये विद्यैक्यमिति पूर्वः पक्षः । नन्वन्यथात्वं न विद्यैक्यं भवितुमर्हति, कुतः, 'त्वं न उद्गाय' (बृ. १-३-७) इत्युद्गीथकर्तृकत्वेनैकत्रान्यत्र 'तमुद्गीथमुपासांचक्रिरे' (छा. १-२-७) इत्युद्गीथत्वेन प्राणस्योपास्यत्वप्रतिपादकाच्छब्दादितिचेद्, नैतावता विद्याभेदः, कुतः, देवासुरसङ्ग्रामोपक्रमासुरात्ययाभिप्रायप्रभृतीनामुभयत्राविशेषात् । अतो विद्यैक्यमिति सिद्धम् ॥ ६ ॥

**एवं** पूर्वपक्षे राद्धान्तः—

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

नैव विद्यैक्यं युक्तं, कुतः, प्रकरणभेदाद् एकत्र 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा. १-१-१) इत्युद्गीथावयव ओङ्कारे प्राणदृष्टिरुपदिश्यते अन्यत्र तु 'त्वं न उद्गाय' (बृ. १-३-२) इति सकलैव सामभक्तिः प्राणत्वेनावेद्यत इत्युपक्रमभेदात् । तत्र दृष्टान्तः—परोवरीयस्त्वादिवद् । यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'एष परोवरीयानुद्गीथः' (छा. १-९-२) इति परोवरीयस्त्वादिविशिष्टमुद्गीथोपासनमक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिविशिष्टोद्गीथोपासनाद् भिन्नं, तद्वत् ॥ ७ ॥

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

**ननूद्गीथ**विद्येत्युभयत्र संज्ञातः संज्ञाया एकत्वाद्विद्यैक्यमिति चेत्, तदुक्त 'न वा प्रकरणभेदाद्' (ब्र. सू. ३-३-७) इति सूत्रे । अस्ति तु तत् संज्ञैकत्वं प्रसिद्धभेदानामप्यग्निहोत्रप्रभृतीनां काठकैकग्रन्थपठितानां काठकसंज्ञैकत्वम् ॥ ८ ॥

* ४ व्याप्त्यधिकरणम् *

**पूर्वम्** 'ओमित्येतदक्षरमुद्गीथम्' (छा. १-१-१) इत्यत्रोङ्कारोद्गीथयोर्विशेषणविशेष्यभावं सिद्धवत्कृत्य प्रक्रमभेदाद् विद्याभेदः सिद्धान्तितः । स न युज्यत

* मुद्रितब्रह्मसूत्रपुस्तकेषु चशब्दो न पठ्यते.

१. 'क्याभावान्नोपसंहार.' ख पुस्तके पाठः. २ 'युक्त इ' ख पुस्तके पाठः.

इत्याक्षेपसङ्गत्येदमाह—

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

अत्र पूर्वपक्षे पूर्वोक्तासिद्धान्तासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र 'ओमित्येतदक्षरमुद्गीथम्' इत्योङ्कारोद्गीथशब्दयोः सामानाधिकरण्यं श्रूयते। तत् किं 'नाम ब्रह्मे'तिवदध्यासार्थम्, उत 'यद्रजतं सा शुक्तिरि'तिवदपवादार्थम्, आहोस्वित् 'सिन्धुरः करी'तिवदैक्यप्रमित्यर्थम्, उताहो 'नीलोत्पलमि'तिवद्विशेषणविशेष्यभावनिबन्धनमिति संशये निर्धारणे कारणाभावादनिर्धारणार्थकमिदमिति[1] पूर्वः पक्षः। सिद्धान्तस्तु ओङ्कारस्य ऋग्यजुस्सामसु त्रिषु व्याप्तेर्व्याप्तत्वात् क ओङ्कार उपास्य इत्यपेक्षायोद्गीथावयवत्वेनोङ्कारो विशेष्यते 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति। एवञ्चोद्गीथमित्योङ्कारस्य विशेषणमित्येव समञ्जसं निरवद्यम्। सौत्रचशब्देन तुशब्दस्थाननिवेशिनाध्यासापवादैक्यपक्षाणां निरासः। न तावदध्यासपक्षः, तस्योत्तरत्र विधीयमानोपास्त्यपेक्षया पृथक्फलकल्पनाप्रसङ्गात्। नाप्यपवादपक्षः, ओङ्कारोद्गीथयोरन्यतरज्ञानस्य बाधकत्वादर्शनात्। नाप्यैक्यपक्षः, ओङ्कारोद्गीथयोः पर्यायत्वाभावात्। अतः परिशेषाद्विशेषणपक्ष एव श्रेयानिति सिद्धम्॥ ९॥

* ५ सर्वाभेदाधिकरणम् *

पूर्वमुद्गीथत्वविशेषणादोङ्कारस्य सर्ववेदव्याप्तिव्यावृत्तिवद् 'एवं विद्वान्' इति प्रकृतगुणमात्रग्राहकैवंशब्दाच्छाखान्तरगुणव्यावृत्तिरिति दृष्टान्तसङ्गत्येदमाह—

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

अत्र पूर्वपक्षे गुणानुपसंहारः, सिद्धान्त उपसंहार इति फलभेदः। अत्र वाजसनेयके छान्दोग्ये च प्राणविद्यायां वागादयो वसिष्ठत्वादिगुणाः श्रूयन्ते, न कौषीतक्यादिशाखासु। तत्र किं वसिष्ठत्वादिगुणा अन्यत्रोक्ता अन्यत्र नोपसंह्रियन्ते, उतोपसंह्रियन्त इति सन्देहे नोपसंहर्तव्या इति पूर्वः पक्षः। सिद्धान्तस्तु अन्यत्र वसिष्ठत्वादिगुणानामश्रवणस्थल इमे वसिष्ठत्वादयो गुणाः उपसंहर्तव्याः, कस्मात्, सर्वाभेदात् सर्वासु शाखासु प्राणसंवादस्थायाः प्राणविद्याया अभिन्नत्वात्। अत एव प्रकृतगुणानामिवाप्रकृतगुणानामपि बुद्धिस्थस्यैवंशब्दग्राह्यत्वात् सर्वे सर्वत्रोपसंहर्तव्या इति सिद्धम्॥ १० ॥

---

१. 'कमिति' ख पुस्तके पाठः. २. 'क्षायामुद्गी' ख पुस्तके पाठः.

३. 'षत्वाद्वि' क पुस्तके पाठः.

* ६ आनन्दाद्यधिकरणम् *

ननु प्राणस्य सविशेषत्वाद् [1]भवेच्छाखान्तरीयवसिष्ठत्वाद्युपसंहारः । ब्रह्मणस्तु निर्विशेषत्वात् स्वशाखागतधर्मैरेव प्रमितिसिद्धेर्न शाखान्तरगतानन्दाद्युपसंहार इति प्रत्युदाहरणसङ्गत्येदमाह—

## आनन्दादयः प्रधानस्य ॥ ११ ॥

अत्र पूर्वपक्षे आनन्दादिगुणानुपसंहाराद्वाक्यार्थानिर्धारणं, सिद्धान्ते तन्निर्धारणमिति फलभेदः । अत्र निर्गुणब्रह्मपरासु श्रुतिषु आनन्दस्वरूपत्वादयो धर्माः कचित् कचिच्छ्रूयन्ते । ते किं सर्वत्रोपसंहर्तव्या उत नेति सन्देहे नोपसंहर्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु प्रधानस्य ब्रह्मण आनन्दादय आनन्दस्वरूपत्वादयो धर्माः सर्वत्रोपसहर्तव्याः, कस्मात्, सर्वाभेदादेव, सर्वशाखासु वेद्यस्य ब्रह्मण एकत्वेन विद्याया एकत्वादित्यर्थः ॥ ११ ॥

ननु यदि ब्रह्मण एकत्वादानन्दाद्युपसंहारः, तर्हि प्रियशिरस्त्वादिधर्मोपसंहारोऽपि स्यादित्याशङ्क्याह—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

प्रियशिरस्त्वादिधर्माणां न सर्वत्र प्राप्तिः । हि यस्मात् प्रियमोदप्रमोदानन्दानां परस्परापेक्षयोपचयापचयौ वृद्धिक्षयावनुभूयेते । तौ च धर्मिभेदे सत्येव स्वाभाविकौ भवतः ब्रह्मणस्तु निर्भेदत्वात् । एतेन संयद्वामत्वादयो ब्रह्मधर्मा व्याख्याताः, तेषामप्युपास्यगुणत्वाविशेषात् ॥ १२ ॥

ज्ञानोपयोगित्वादानन्दादीनां संयद्वामत्वादिधर्मेभ्यो वैषम्यमाह—

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

उपास्यधर्मापेक्षया इतरे त्वानन्दादयो धर्मा ज्ञानैकफलाः सर्वत्रोपसंह्रियन्ते । कुतः, अर्थसामान्याद्, अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्यादेकत्वादित्यर्थः । एवं चान्तरेणोपसंहारं यथावद् ब्रह्मस्वरूपविषयकमहावाक्यार्थज्ञानसाध्याया अविद्यानिवृत्तेरसम्भवात् सर्वत्रानन्दादय उपसंहर्तव्या इति सिद्धम् ॥ १३ ॥

* ७ आध्यानाधिकरणम् *

पूर्वत्र ब्रह्मस्वरूपाणामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानोपायत्वमभिहितम् ।

---

१. 'भवतु शाखा' ख पुस्तके पाठः.

अधुना त्वब्रह्मस्वरूपस्यानुपसंहार्यस्यार्थादिपरत्वरूपधर्मस्य ब्रह्मज्ञानोपायत्वमभिधीयत इत्येकफलत्वसङ्गत्येदमाह—

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

तत्र पूर्वपक्षे वाक्यभेदाद्विद्याभेदः, सिद्धान्ते वाक्यैक्याद्विद्यैक्यमिति फलभेदः। कठवल्लीषु (३-१०) पठ्यते— 'इन्द्रियेभ्यः परा ह्यर्था' इत्यारभ्य 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (क. ३-११) इति। तत्र किमिमानि वाक्यानि भिन्नान्युतात्मपरमेकमेव वाक्यमिति सन्देहे प्रतिपाद्यभेदाद् भिन्नानीति पूर्वः पक्षः। सिद्धान्तस्तु आध्यानाय आध्यानसाध्यसाक्षात्काराय पुरुष एवार्थादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्य इत्येकमेव वाक्यम्। न त्विन्द्रियपरत्वेनार्थादयः प्रतिपाद्याः प्रयोजनाभावात्। नहीन्द्रियपरत्वेनार्थज्ञानं स्वतः किञ्चित् प्रयोजनं जनयति। अतः प्रतिपाद्यभेदाभावान्न वाक्यभेदः ॥ १४ ॥

इत्थं वाक्यस्यात्ममात्रपरत्वे फलवत्त्वं लिङ्गमभिधायापूर्वत्वमपि लिङ्गमाह—

## आत्मशब्दाच्च ॥ १५ ॥

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' (क. ३-१२) इति प्रकृतपुरुषे आत्मशब्दश्रवणाच्चात्मपरमेवेदं वाक्यं, तस्यात्मनः श्रुत्या मानान्तरावेद्यत्वरूपापूर्वत्वप्रतिपादनादिति भावः ॥ १९ ॥

* ८ आत्मगृहीत्यधिकरणम् *

पूर्वं वाक्यभेदभियार्थादीनां पृथक्प्रतिपाद्यत्वं नास्तीत्यभिहितम्। तद्वत् 'प्रजापते रेतो देवा' इति पूर्ववाक्ये हिरण्यगर्भस्य प्रकृतत्वाद्वाक्यभेदभिया स एवात्मशब्देनाभिधीयत इति दृष्टान्तसङ्गत्येदमाह—

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

अत्र पूर्वपक्षे आत्मपदस्य परमात्मपरत्वाभावात् तत्प्रमित्यर्थं नानन्दादिधर्माणामत्रोपसंहारः, सिद्धान्ते परमात्मन एवात्रोक्तत्वात् तत्प्रमित्यर्थं तदुपसंहार इति फलभेदः। ऐतरेयके (१-१) श्रूयते—'आत्मा वा इदमेक एवाग्र आसीत्। नान्यत् किञ्चन मिषदि'त्यादि। तत्र किमात्मशब्देन हिरण्यगर्भ उच्यत उत परमात्मेति सन्देहे हिरण्यगर्भ इति पूर्वः पक्षः। सिद्धान्तस्तु—अस्मिन् सृष्टिवाक्ये

१. 'ज्ञान' ख पुस्तके पाठः. २. 'र्थानां' क पुस्तके पाठः.

आत्मशब्देन परमात्मन एव गृहीतिर्ग्रहण नान्यस्य, इतरवत्, यथा इतरेषु सृष्टिवाक्येषु 'आत्मन आकाशः सम्भूतः' (तै. २-१-१) इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणं, तद्वदत्रापि । कुतः, उत्तरात्, 'स ईक्षत लोकान्नु सृजा' इति । 'स इमाँल्लोकानसृजत' (ऐ. १-१,२) इतीक्षणपूर्वकस्रष्टृत्वरूपोत्तरविशेषणादित्यर्थः । तच्च विशेषणं परमात्मन्येव मुख्यत्वेन श्रुत्यन्तरेष्ववगतमिति भावः ॥ १६ ॥

पूर्वपक्षबीजमनूद्य दूषयति—

## अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

लोकसृष्टिवाक्यपर्यालोचनया हिरण्यगर्भ एव वाक्यान्वयान्न परमात्मग्रहणं युक्तमिति चेदत्राह—परमात्मन एव ग्रहण युक्तं स्यात् । कुतः, अवधारणाद् 'आत्मा वा इदमेक एवाग्र आसीद्' (ऐ. १-१) इति सृष्टेः प्रागेकत्वावधारणस्य परमात्मन्येवाञ्जसत्वात् । ततश्चात्र शाखान्तरोक्तभूतसृष्टिरुपसंहर्तव्येत्यदोषः ॥ प्रथमवर्णकम् ॥ १७ ॥

पूर्वत्र वाक्यैक्यबलादर्थादिपरत्वं परित्यज्य विद्यैक्यमवादि । इह तूपक्रमभेदेन वाक्यभेदाद्विद्यैक्यं न स्यादिति प्रत्युदाहरणसङ्गत्येदमाह—

आत्मगृहीतिरितरवदुत्तरात् ।

अत्र पूर्वपक्षे विद्याभेदाद् गुणानुपसंहारः, सिद्धान्ते तदभेदादुपसंहार इति फलभेदः । बृहदारण्यके (४-३-७) 'कतम आत्मे'त्यात्मशब्देनोपक्रम्य 'स वा एष महानज आत्मा' (बृ. ४-४-२२) इत्यात्मशब्देनोपसंहृतम् । छान्दोग्ये तु 'स देवं' (छा. ६-२-१) इति विनैवात्मशब्दं सन्मात्रमुपक्रम्य 'स आत्मा तत्त्वमसि' (छा. ६-८-७) इत्युपसंहृतम् । तत्र किमनयोर्वाक्ययोस्तुल्यार्थत्वमुत भिन्नार्थत्वमिति संशये भिन्नार्थत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु छान्दोग्ये सत्पदेनात्मन एव गृहीतिरितरवद् बृहदारण्यके आत्मपदेनात्मग्रहणवत्, कुतः, उत्तरात् 'स आत्मे' त्युपसंहारबलात् । अत उभयत्र तुल्यार्थत्वमित्यर्थः ॥ १६ ॥

अन्वयादिति चेत् स्यादवधारणात् ॥

ननूपसंहारबलात् सत्पदेनात्मगृहीतिरित्यसङ्गतम् । उपसंहारस्योपक्रमान्वयादुपक्रमपरतन्त्रत्वादिति चेदत्राह—सत्पदेनात्मगृहीतिर्युक्ता स्यात्, कुतः, 'सदेवे' त्याद्वितीयत्वावधारणादित्यर्थः ॥ द्वितीयवर्णकम् ॥ १७ ॥

---

१. 'व समञ्जस' खपुस्तके पाठः, २. 'त्तत्राह' खपुस्तके पाठः.

* ९ कार्याख्यानाधिकरणम् *

पूर्वं सन्दिग्धसदुपक्रमस्य वाक्यशेषान्निर्णयवदाचामन्तीति वर्तमानापदेशस्य विधित्वसन्देहे आचामेदिति वाक्यशेषाद् विधित्वनिर्णय इति दृष्टान्तसङ्गत्येदमाह—

## कार्याख्यानादपूर्वम् ॥ १८ ॥

अत्र पूर्वपक्षे प्राणविद्याङ्गत्वेनापूर्वस्याचमनस्य विधेयत्वात् तस्यान्यत्र प्राणविद्यायामुपसंहारः, सिद्धान्ते त्वनुपसंहार इति फलभेदः। बृहदारण्यकच्छान्दोग्ययोरुभयत्र 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' (बृ. ६-१-१४) 'एवंविदशिष्यन्नाचामेदशित्वाचाचामेदेतमेव तदनमनग्नं कुरुते' 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' (छा. ५-२-२) इति श्रूयते। तत्राचमनमनग्नताचिन्तनं च प्रतीयते। तत्रोभयविधाने वाक्यभेदभयादेकमेव विधेयम्। तदेकं किमाचमनमुतानग्नताचिन्तनमिति विशये आचमनमिति पूर्वः पक्षः। सिद्धान्तस्तु अनग्नताचिन्तनमेवापूर्वं प्राणविद्याङ्गत्वेन विधेयं, नाचमनम्। कुतः, कार्याख्यानाद् 'द्विजो नित्यमुपस्पृशे'-दित्यादिना स्मार्तविधिना सकलानुष्ठानाङ्गत्वेन शुद्ध्यर्थं कार्यस्याचमनस्य प्राणविद्यायामपि विधिप्राप्तस्याख्यानादनग्नताविधानार्थमनुवादादित्यर्थः॥ १८ ॥

* १० समानाधिकरणम् *

पूर्वत्र प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तम्। इह त्वेकशाखायां विप्रकृष्टदेशस्थवाक्ययोरेकस्यानुवादकत्वमन्यस्य विधायकत्वमित्यानिश्चयादुभयोरपि स्वनिकटस्थगुणविशिष्टविद्याविधायकत्वमिति प्रत्युदाहरणसङ्गत्येदमाह—

## समान एवञ्चाभेदात् ॥ १९ ॥

अत्र पूर्वपक्षे विद्ययोर्भेदाद् गुणानुपसंहारः, सिद्धान्ते गुणोपसंहार इति फलभेदः। वाजसनेयशाखायामग्निरहस्ये शाण्डिल्यविद्या श्रूयते—'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्यादिना। तत्रैव बृहदारण्यके (५-६-१) पुनः सैव श्रूयते—'मनोमयोऽयं पुरुषो भास्सत्य' इति। तत्र किमग्निरहस्यबृहदारण्यकस्थयोर्विद्ययोर्भेद उतैक्यमिति विशये अनयोर्विद्ययोर्भेद इति पूर्वः पक्षः। सिद्धान्तस्तु यथा भिन्नासु शाखासु विद्यैक्य गुणोपसंहारश्च भवति, एवं समाने च समानायामपि शाखायां भवितुं युक्तम्। कुतः, अभेदाद् उपास्यस्य मनोमयत्वादिगुणकस्योभयत्राप्यभेदेन प्रत्यभिज्ञानात्। एवं चाग्निरहस्ये विद्यां विधाय बृहदा-

रण्यके तदनुवादेन सर्वेशानत्वादयो गुणा विधीयन्त इत्युभयत्र शाण्डिल्यविद्यैक्यमिति सिद्धम् ॥ १९ ॥

* ११ सम्बन्धाधिकरणम् *

**पूर्वेण** दृष्टान्तसङ्गत्येदमाह –

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अत्र पूर्वपक्षे प्रतिस्थानं नामद्वयानुष्ठानं, सिद्धान्ते यथाश्रुत्येकैकनामानुष्ठानमिति फलभेदः । बृहदारण्यके सत्यविद्यायामाधिदैविकपुरुषस्यादित्यस्याहरित्येतन्नाम ध्यानायोपादिष्टम्, आध्यात्मिकस्य त्वक्षिपुरुषस्याहमित्येतन्नामेति । तत्र किमस्यां सत्यविद्यायां नाम्नोर्व्यवस्थया ध्यानं कर्त्तव्यमुत नामद्वयस्य प्रतिस्थानं ध्यानमिति संशये यथा शाण्डिल्यविद्यायामेकशाखायां विभागेनाधीतायामेकविद्यात्वसम्बन्धादन्योन्यं गुणोपसंहारः पूर्वमुक्तः, एवमन्यत्रापि सत्यविद्यायां भवितु युक्तम् एकविद्यात्वसम्बन्धादिति पूर्वः पक्षः ॥ २० ॥

**सिद्धान्तस्तु**—

## न वा विशेषात् ॥ २१ ॥

नैवोभयोरुभयत्रोपसंहारः । कुतः, विशेषात् । 'तस्याहरि'ति 'तस्याहमि'ति चायतनविशेषणव्यपाश्रयेणैवोपानिषदोर्विशेषोपदेशात् ॥ २१ ॥

**किञ्च**—

## दर्शयति च ॥ २२ ॥

विद्यान्तरे 'हिरण्यश्मश्रुरि'त्यादिनादित्यपुरुषस्य रूपमुक्त्वा तद्रूपमक्षिपुरुषेऽतिदिशति 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' (छा. १-७-५) इति । सोऽयमतिदेशो विद्यास्थले स्थानभेदान्नोपसंहार इति दर्शयति । इतरथायमतिदेशो निरर्थक एव स्यात् । अतो नाम्नोर्व्यवस्थेति सिद्धम् ॥ २२ ॥

* १२ सम्भृत्यधिकरणम् *

**पूर्वोक्तन्यायमतिदिशति**—

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

अस्यातिदेशत्वान्न पृथक् सङ्गत्यपेक्षा । अत्र पूर्वपक्षे विद्याभेदस्य गुणव्यवस्थापकत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । राणायनीयानां खिलेषु

पठ्यते–'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान'ेति । तत्र श्रूयमाणसम्भृतिद्युव्याप्त्यादिकं तदीयोपनिषद्विहितशाण्डिल्यादिब्रह्मविद्यासूपसंहर्त्तव्यं न वेति सन्देह उपसंहर्तव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु 'वीर्या सम्भृतानी'ति या वीर्यसम्भृतिः समृद्धिः, या च 'दिवमाततान'ेति द्युलोकव्याप्तिः, तयोः समाहारः सम्भृतिद्युव्याप्ति तदपि नोपसंहर्तव्यम् । कुतः, अतश्च अत एव नाम्नोरिव व्यवस्थापकस्थानविशेषादेव । तस्मात् सम्भृत्यादिगुणविशिष्टमुपासनान्तरं तत्र विधेयमिति सिद्धम् ॥ २३ ॥

: १३ पुरुषविद्याधिकरणम् :

पूर्वत्रासाधारणगुणप्रत्यभिज्ञानाभावात् सम्भृत्यादिविशिष्टविद्याभेद उक्तः । इह त्वसाधारणमरणावभृथगुणविशिष्टपुरुषयज्ञरूपैक्यप्रत्यभिज्ञानाद् विद्यैक्यमिति प्रत्युदाहरणसङ्गत्येदमाह–

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

अत्र पूर्वपक्षे विद्याभेदादुपसंहारः, सिद्धान्ते तद्भेदादनुपसंहार इति फलभेदः । पैङ्गिरहस्ये 'पुरुषो वाव यज्ञ' इति पुरुषविद्या श्रूयते । तत्राशीर्मन्त्रप्रयोगादयो धर्माश्च श्रूयन्ते । तैत्तिरीयेऽपि (नारा. ८०) 'तस्यैवं विदुषो यज्ञस्यात्मे'त्यादि । तत्रेतरत्रोक्ताः पुरुषयज्ञस्य धर्मास्तैत्तिरीयकेऽप्युपसंहर्त्तव्या उत नेति संशये उपसंहर्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु पुरुषविद्यायामिव, यथा पैङ्गिनां पुरुषविद्यायां पुरुषो यज्ञत्वेन कल्पितः, तदीयमायुस्त्रेधा विभज्य सवनत्वेन कल्पितम् । अशिशिषादीनि च दीक्षादिभावेन कल्पितानि, तथेतरेषां तैत्तिरीयकाणां पुरुषविद्यायां सवनादीनामनाम्नानात् । तेषां हि पुरुषविद्यायां पुरुषसम्बन्धियज्ञोऽनुक्रान्तः । पत्नीयजमानवेदवेदिबर्हिर्यूपादिकं चानुक्रान्तम् । यत्तु मरणावभृथगुणस्य विद्यैक्यप्रत्यभिज्ञापकत्वमवादि, तन्न, बहुगुणभेद एकस्य प्रत्यभिज्ञापकत्वायोगात् । अतो विद्यैक्याभावान्नोपसंहर्तव्या इति सिद्धम् ॥ २४ ॥

* १४ वेधाद्यधिकरणम् *

पूर्वं यथा पुरुषयज्ञस्यात्मविद्यासन्निधानात् तच्छेषत्वं, तथा मन्त्राणां कर्मणां च तत्तद्विद्यासन्निधानात् तच्छेषत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## वेधाद्यर्थभेदात् ॥ २५ ॥

अत्र पूर्वपक्षे मन्त्रादीनां विद्याशेषत्वेनोपसंहारः, सिद्धान्ते त्वनुपसंहार इति फलभेदः । आथर्वणिकानामुपनिषदारम्भे 'सर्वं प्रविध्य हृदय प्रविध्ये'त्यादयो मन्त्राः पठिताः । काण्वानामुपनिषदादौ 'देवा ह वै सत्रं निषेदुः' इत्यादि प्रवर्ग्यब्राह्मणं पठितम् । तत्र किमेते 'सर्वं प्रविध्ये'त्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन् न वेति सन्देहे उपसंह्रियेरन्निति पूर्वं पक्षः । सिद्धान्तस्तु नोपसंह्रियेरन् । कुतः, वेधाद्यर्थभेदात्, 'सर्वं प्रविध्ये'त्यादिमन्त्रप्रकाशितानां वेधादीनामर्थानामाभिचारिककर्मादिसमवेतानां भेदाद् विद्यास्वसमवेतत्वादित्यर्थः । एवं चाभिचारिककर्मादिसमवेतार्थप्रकाशनसामर्थ्यलक्षणं लिङ्गं सन्निधि दुर्बलं तिरस्कृत्य मन्त्राणामाभिचारिककर्माङ्गत्वं साधयतीति न विद्याङ्गत्वम् । प्रवर्ग्यादिकर्मणा च सन्निधेर्बलीयसा श्रुत्यादिना ज्योतिष्टोमादौ विनियुक्तानां न विद्याशेषत्वमिति भावः ॥ २५ ॥

* १५ हान्यधिकरणम् *

**यथा पूर्वं** विद्यासन्निधौ श्रुतस्यापि मन्त्रादेर्विद्यायामनावश्यकत्वादनुपसंहार उक्तः, तथा क्वचिद्धानसन्निधौ श्रुतस्याप्युपादानस्यान्तरेणाप्युपादानं तूष्णीं हानसम्भवेनानावश्यकत्वादनुपसहार इति दृष्टान्तसङ्गत्येदमाह—

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

अत्र पूर्वपक्षे विद्यास्तुतिप्रकर्षासिद्धिः, सिद्धान्ते तूपादानस्यात्रोपसंहाराद् विद्यास्तुतिप्रकर्षसिद्धिरिति फलभेदः । अत्र शाट्यायनिनः पठन्ति—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । ताण्डिनस्तु—'अश्व इव रोमाणि विधूय पापम्' इत्याद्यामनान्ति । तथाथर्वणिकाः—'तथा विद्वान् पुण्यपापे विधूय' इत्याद्यामनन्ति । तत्र शाट्यायनिश्रुतौ पुण्यपापयोरुपादानमात्रं श्रुतम् । तच्च त्यागं विना न सम्भवतीति पुण्यपापत्याग आक्षिप्यते । यत्र तु ताण्ड्याथर्वणवाक्यद्वये पुण्यपापत्यागमात्रं श्रुतं, तत्र त्यक्तयोरुपादानमन्यत्र श्रुतमत्रोपसंहर्तव्यं न वेति सन्देहे नेति पूर्वः पक्षः । सिद्धान्तस्तु सौत्रतुशब्दः कैवल्यवाची । तथा च केवलहानौ श्रुतायां सत्या तत्रोपादानमुपसंहर्तव्यम् । कुतः, उपायनशब्दशेषत्वात् । 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया

---

१. 'पुण्यपापे विधूय' इत्येतत्स्थाने 'नामरूपाद्विमुक्तः' इत्येव मुण्डके भाष्यादौ च पाठ,

दुष्कृतम्' इति कौषीतकिरहस्ये (१-४) हानसन्निधौ श्रूयमाणस्य हानशब्देनापेक्षितस्योपादानार्थकोपायनशब्दस्य हानं प्रति शेषत्वावगमादित्यर्थः। अश्वरोमदृष्टान्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात् परैरुपादानमावश्यकमिति भावः। शाखान्तरस्थोऽपि विशेषः शाखान्तरेऽप्यपेक्षित उपसंहरणीय इत्यत्र दृष्टान्तमाह—कुशाच्छन्दस्स्तुत्युपगानवत् कुशावत् छन्दोवत् स्तुतिवदुपगानवत्। तत्र यथा 'कुशा वानस्पत्या' इति भाल्लविनां श्रुतौ कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्यायनिनामौदुम्बरा इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते, यथा 'छन्दोभिः स्तुवत' इत्यत्र देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्गिश्रुत्या प्रतीयते, यथा षोडशिनः पात्रविशेषस्य ग्रहणेऽङ्गभूतं स्तोत्र कदा कर्तव्यमित्यपेक्षायां छन्दोगानां कालविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यादितैत्तिरीयकश्रुत्या कालविशेषः प्रतीयते, यथा 'ऋत्विज उपगायन्ती'ति सामान्यवाक्यं शाखान्तरीयं 'नाध्वर्युरुपगायती'ति विशेषमपेक्ष्याध्वर्युवर्जिता ऋत्विज उपगायन्तीत्येतदर्थपरतया निश्चीयते, एवं च यथा कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, तथा हानावुपायनान्वय इति सिद्धम्। श्रुत्यन्तरगतं विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्राष्टदोषदुष्टविकल्पः स्यात्। स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्यां जैमिनिना—'प्रतिषेधे विकल्पः स्याद्' (१०-८-१५) इति ॥ प्रथमवर्णकम् ॥

पूर्वं मन्त्रादीनां विद्यासन्निधेरकिञ्चित्करत्वमुक्तं यथा, तथात्रापि विधूननशब्दस्योपायनशब्दसन्निधिरप्रयोजक इति दृष्टान्तसङ्गत्या वर्णकान्तरमाह—

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम्।

अत्र पूर्वपक्षे विद्यावशात् सुकृतादिहान्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। उदाहृतश्रुतिष्वेव किं पुण्यपापयोर्विधूननं हानमभिप्रेतम् उत तयोः फलतश्चालनमिति विशये चालनमेवेति पूर्वः पक्षः। सिद्धान्तस्तु हानावेवायं विधूननशब्दो वर्तितुमर्हति। कुतः, उपायनशब्दशेषत्वाद् उपायनशब्दसन्निधौ श्रूयमाणस्य विधूननशब्दस्योपायनशब्द प्रति शेषत्वादित्यर्थः। एवञ्चोपादानात्मकोपायनस्य हानं विनासम्भवाद् विधूननशब्देन 'धूञ् कम्पन' इति धात्वर्थचलनवाचकेनापि हानमेव लक्ष्यमिति भाव.। ननूपायनशब्दसान्निधौ श्रूयमाणविधूननशब्दस्य हानलक्षकत्वेऽपि केवलविधूननशब्दस्य न तल्लक्षकत्वं निश्चायकाभावादित्याशङ्क्याह—कुशा-

च्छन्दस्स्तुत्युपगानवद् । यथा कुशादिस्थले शाखान्तरीयविशेषश्रवणं निर्णायकं तथेहापि कचिद्विधूननसन्निधौ श्रूयमाणमुपायनं सर्वत्र विधूननस्य हानलक्षकत्वे निश्चायकमित्यर्थः । तदुक्तमिति पूर्ववद्व्याख्येयम् ॥ २६ ॥

* १६ साम्परायाधिकरणम् *

पूर्वं विद्यायाः कर्महानिहेतुत्वं सिद्धं कृत्वा केवलहानश्रवणे उपायनोपसंहार उक्तः । सम्प्रति विद्यायाः कर्महानिहेतुत्वं नास्तीत्याक्षेपसङ्गत्येदमाह—

## साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

अत्र पूर्वपक्षे विद्यासामर्थ्यानादरः, सिद्धान्ते तदादर इति फलभेदः । कौषीतकिश्रुतौ (विरजां नदीं) 'मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' (१ ४) इति पर्यङ्कस्थब्रह्मोपासकस्य कर्महानिः श्रूयते । तत्र किं विरजानदीतरणानन्तरं कर्महानिरुत देहत्यागात्प्राक्काल इति विशये श्रुतिबलान्नदीतरणानन्तरमेवेति पूर्वः पक्षः । सिद्धान्तस्तु साम्पराये देहत्यागात् प्राक्परलोकसाधनीभूतविद्याकाल एव कर्महानिर्युक्ता । कुतः, तर्तव्याभावात् । नदीतरणानन्तरं पुण्यपापकर्मणस्तर्तव्यस्य प्राप्तव्यस्य फलान्तरस्याभावात् । ननु कर्महानिहेतोरभावादिति चेद्, न, कर्महानिहेतोर्विद्यायाः प्राक्सत्त्वात् । कर्महानिं विना नदीतरणानुपपत्तेश्च । ततो जीवत एव विद्यासामर्थ्यात् कर्महानिः । तथा ह्यन्ये शाखिनस्ताण्ड्यादयो जविद्दशायामेव कर्महानिम् 'अश्व इव रोमाणि' इत्यादावधीयत इत्यर्थः ॥ २७ ॥

ननु कर्महानेर्विद्याफलत्वे ब्रह्मप्राप्तेरिव देहत्यागोत्तरकालीनत्वं स्यादत आह—

## छन्दत उभयाविरोधात् ॥ २८ ॥

छन्दतः स्वेच्छातो विद्यानुष्ठानं जीवत एवेति तद्धेतुककर्मक्षयो जीवत एव युक्तः, सति हेतौ कार्यविलम्बायोगात् । एवं सति विद्याकर्मक्षययोर्निमित्तनैमित्तिकभावे कौषीतकिताण्डिश्रुत्योरुभयोरविरोधो भवतीत्यर्थः । ब्रह्मप्राप्तेर्देहत्यागं विनानुपपत्तेः प्रकृते चानुपपत्त्यभावाज्जीवत एव कर्मक्षय इति भावः ॥ २८ ॥

* १७ गत्यर्थवत्त्वाधिकरणम् *

इत्थं प्रासङ्गिकं विद्योदयानन्तरमेव कर्महानमित्यभिधाय यथा हानसन्निधौ

---

१. 'ताण्ड्यादिकौषीतकिश्रु' कपुस्तके पाठः,

क्वचिच्छ्रूयमाणमुपायनं सर्वत्रोपसंह्रियते, तथा हानसन्निधौ क्वचिच्छ्रूयमाणो देवयानः पन्थाः सर्वत्रोपसंहर्तव्य इति दृष्टान्तसङ्गत्येदमाह—

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

तत्र पूर्वपक्षे निर्गुणविदोऽपि मुक्त्यर्थं मार्गापेक्षा, सिद्धान्ते त्वनपेक्षेति फलभेदः । कर्महानिसन्निधौ क्वचिद् देवयानः पन्थाः श्रुतः, क्वचिन्न श्रुतो निर्गुणविद्यास्थले । तत्र किं देवयानोपसंहारोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति क्वचित् सगुणविद्यायां देवयानमार्गोऽस्ति क्वचिन्निर्गुणविद्यायां नेति । अन्यथा सर्वत्र देवयानमार्गोपसंहाराङ्गीकारे 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु. ३-१-३) इति श्रुतिविरोधः स्यात् । अतो निर्गुणविद्यायां मार्गोपसंहारो व्यर्थ इत्यर्थः ॥ २९ ॥

नेनु[1] तर्हि सगुणविद्यायामपि मार्गोपसंहारो व्यर्थः स्यादित्यत आह—

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

गतेरुभयथा भाव उपपन्नस्तल्लक्षणार्थोपलब्धेः सा गतिर्लक्षणं कारणं यस्य सगुणविद्याफलस्य पर्यङ्कस्थब्रह्मप्राप्तिरूपस्य स तल्लक्षणार्थः, तस्य श्रुतिषूपलब्धेः । अतः सगुणविद्यायां मार्गोऽर्थवान् न निर्गुणविद्यायाम् । लोकवद्, यथा लोके सेतुवासिनां गङ्गाप्राप्त्यर्थं मार्गोऽपेक्षितो न गङ्गास्थानां, तद्वदित्यर्थः ॥ ३० ॥

* १८ अनियमाधिकरणम् *

पूर्वं सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्था यथोक्ता, तथा सगुणविद्यास्वपि व्यवस्थास्त्विति दृष्टान्तसङ्गत्येदमाह—

## अनियमः सर्वेषा[2]मविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

अत्र पूर्वपक्षे नियतस्य मार्गस्यानुपसंहारः, सिद्धान्ते त्वनियतस्योपसंहार इति फलभेदः । सगुणोपासनेषु क्वचित् पञ्चाग्न्युपासनादिषु मार्गः श्रूयते, क्वचित्तु वैश्वानरादिषु न श्रूयते । तत्र किं येषु मार्गः श्रुतस्तेषामेव तस्य नियमः किं वा सर्वेषामनियम इति सन्देहे विद्याविशेषप्रकरणान्नियम इति पूर्वः पक्षः । सिद्धान्तस्तु

---

१. 'ननु स' कपुस्तके पाठः. २. 'सर्वासामविरोध.' इत्येव तु मुद्रितभाष्यादिषु पाठः.

सर्वेषां सगुणोपासनानां मार्गस्यानियमः । नन्वनियमाभ्युपगमे प्रकरणविरोधः । नैषोऽस्ति विरोधः । कुतः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यां 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा. ५-१०-१) इत्याद्या श्रुतिः,

'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः ॥' (गी. ८-२६)

इत्याद्या स्मृतिः, ताभ्यामित्यर्थः । एवञ्च पञ्चाग्निविदामिव विद्यान्तरशीलिनामप्यविशेषेणार्चिरादिमार्गप्रतिपादकवाक्येन प्रकरणं बाध्यमिति बोध्यम् ॥ ३१ ॥

* १९ आधिकारिकाधिकरणम् *

पूर्वं मुक्तिफलत्वान्निर्गुणविद्यायां मार्गो निरर्थकः, ब्रह्मलोकप्राप्तिफलत्वात् सगुणविद्यायां सर्वत्रार्थवानिति व्यवस्था कृता । सा न युक्ता, निर्गुणविदामपीतिहासादौ पुनर्जन्मदर्शनेन निर्गुणविद्याया मुक्तिसाधनत्वासम्भवादित्याक्षेपसङ्गत्येदमाह—

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

अत्र पूर्वपक्षे निर्गुणविद्यायाः कैवल्याहेतुत्वान्मार्गोपसंहारः, सिद्धान्ते तस्यास्तद्धेतुत्वध्रौव्यात् तदनुपसंहार इति फलभेदः । अपान्तरतमा नाम कलिद्वापरयोः सन्धौ विष्णुनियोगात् कृष्णद्वैपायनः सम्बभूवेत्यादिनापान्तरतमोवासिष्ठादीनां निर्गुणब्रह्मविदां पुनर्जन्म स्मर्यते । तत्र किं विदुषां वर्तमानदेहपातानन्तर देहान्तरप्राप्तिरस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु अपान्तरतमःप्रभृतीनामाधिकारिकाणां लोकव्यवस्थाहेतुष्वधिकारेषु परमेश्वरेण नियुक्तानां सम्यग्दर्शनतः प्रक्षीणकर्मणां यावदधिकारमवस्थितिर्यावत्प्रारब्धकर्मावस्थितिः । तस्य प्रारब्धकर्मणो भोगेन क्षये प्रतिबन्धकान्तराभावादप्रतिबन्धसाक्षात्कारो वर्तमानदेहपातानन्तरं कैवल्यं सम्पादयतीति न देहान्तरप्राप्तिरिति सिद्धम् ॥ ३२ ॥

* २० अक्षरध्यधिकरणम् *

पूर्वं यथाधिकारिपुरुषाणामारब्धकर्मवशादेव देहान्तरारम्भसिद्धेर्न सञ्चितकर्मान्तरस्य तद्धेतुत्वमित्युक्तं, तथेहापि तत्तद्वाक्योक्तैरेव निषेधैरुपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां ब्रह्मधीहेतुत्वमिति दृष्टान्तसङ्गत्येदमाह—

१. 'इमा' कपुस्तके पाठः.

## अक्षरधियान्त्ववरोधः सामान्यतद्भावाभ्या-मौपसदवत्तदुक्तम् ॥ ३३ ॥

अत्र पूर्वपक्षे श्रुतैरेव निषेधैरुपलक्षणतया सर्वनिषेधे निर्विशेषब्रह्मप्रमितौ लाघवं, सिद्धान्ते तूपलक्षणैकदेशपरिशेषौ परित्यज्य निर्विशेषप्रमितौ नैराकाङ्क्ष्यमिति फलभेदः। बृहदारण्यके (३-८-८) श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि'त्यादि। एवमाथर्वणे अक्षरमुपक्रम्य 'यत्तदद्रेश्यमग्राह्यम्' (मु. १-१-५) इत्यादि। तत्र किं क्वचिन्निषेधश्रुतावश्रुतानिषेधानां श्रुत्यन्तरादुपसंहारोऽस्ति न वेति सन्देहे नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु अक्षरे ब्रह्मणि द्वैतनिषेधधियोऽक्षरधियः, तासां सर्वत्र निषेधश्रुतिष्ववरोध उपसंहारो न्याय्यः। कुतः, सामान्यतद्भावाभ्यां द्वैतनिरासेन ब्रह्मप्रतिपादनस्य सर्वत्र सामान्यं समानत्वं, तस्य ब्रह्मणः प्रतिपाद्यस्य सर्वत्र भाव एकत्वेन प्रत्यभिज्ञायमानत्वं, ताभ्यां हेतुभ्यामित्यर्थः। तत्र दृष्टान्त औपसदवद्, यथा जामदग्न्ये अहीने पुरोडाशिनीषूपसत्सु चोदितानामौपसदानामध्वर्युकर्तृकपुरोडाशशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामप्यध्वर्युणा सम्बन्धः, तथाक्षरप्रमितिशेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामप्यक्षरेण सर्वत्र सम्बन्ध इत्यर्थः। तदुक्तं जैमिनिना प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' (३-३-९) इति ॥ ३३ ॥

* २१ इयदामननाधिकरणम् *

पूर्वं वेद्यस्याक्षरस्यैक्ये विद्यैक्यादक्षरधियामुपसंहार उक्तः। तर्हीह 'द्वा सुपर्णा' (मु. ३-१-१) इति वाक्ये एकस्यैव भोक्तृत्वम्। 'ऋतं पिबन्तौ' (क. ३-१) इति वाक्ये उभयोरपीत्युभयत्र वेद्यभेदाद्विद्याभेद इति प्रत्युदाहरणसङ्गत्येदमाह—

## इयदामननात् ॥ ३४ ॥

अत्र पूर्वपक्षे विद्याभेदादन्योन्यं गुणानुपसंहारः, सिद्धान्ते तदभेदादुपसंहार इति फलभेदः। आथर्वणे 'द्वा सुपर्णा सयुजा' (मु. ३-१-१) इत्यादिर्मन्त्रः श्रूयते, काठकेऽपि 'ऋतं पिबन्तौ' (३-१) इत्यादिः। तत्र किमनयोर्मन्त्रयोर्विद्याभेद उताभेद इति विशये भेद इति पूर्वः पक्षः। सिद्धान्ते मन्त्रद्वये विद्याभेद एव। कुतः, इयत इयत्तावच्छिन्नस्य द्वित्वावच्छिन्नस्योभयत्राप्यभिन्नत्वेनाममनाद् अभिधानादित्यर्थः। अत्र हि मन्त्रद्वये भोक्तृत्वानुवादेन परमात्माभेदः प्रतिपाद्यः।

पिबन्ताविति प्रयोगस्तु भोक्तृजीवसाहचर्यादभोक्तरीश्वरे छत्रिणो गच्छन्तीतिवदुपपद्यत इत्यविरोधः ॥ ३४ ॥

* २१ अन्तराधिकरणम् *

पूर्वं पिबन्तावित्यस्य पदस्य लाक्षणिकत्वेन वेद्यैक्याद्विद्यैक्यमभाणि । इह तु वेद्याभेदेऽपि न विद्याभेदः 'समिधो यजती'त्यादौ यजत्यभ्यासवदात्माभ्यासादिति प्रत्युदाहरणसङ्गत्येदमाह—

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

अत्र पूर्वपक्षे मिथो धर्मानुपसंहारः, सिद्धान्ते तूपसंहार इति फलभेदः । बृहदारण्यके (३-४-१, ३-५-१) 'यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर' इति द्विराम्नायते । तत्र किमनयोर्ब्राह्मणयोर्विद्याभेद उत विद्यैक्यमिति विशये भेद इति पूर्वः पक्षः । सिद्धान्तस्तु आमननादिति पदस्यानुषङ्गः । ब्राह्मणद्वयेऽपि स्वात्मनः सर्वान्तरत्वामननाद्विद्यैक्यं विज्ञेयम्, एकस्मिन् देहे द्वयोर्मुख्यतः सर्वान्तरत्वायोगाद् भूतग्रामवद्, यथा भूतसमूहात्मकस्थूलदेहे पृथिव्यपेक्षया जलमान्तरं जलापेक्षया तेज इत्यादिक्रमेणापेक्षिकं भूतानामान्तरत्वं न मुख्यं तद्वत् । अथ वा 'एको देवः सर्वभूतेषु गूढ' (श्वे. ६-११) इत्यादिश्रुत्यन्तरे सर्वेषु भूतग्रामेषु सर्वान्तर एक एवात्माम्नायते, तद्वदनयोर्ब्राह्मणयोरित्यर्थः । एवं च वेद्यैक्याद्विद्यैक्यमिति सिद्धम् ॥ ३५ ॥

पूर्वपक्षबीजमनूद्य दूषयति—

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा विद्याभेदानङ्गीकारे आम्नानभेदस्याभ्यासस्यानुपपत्तिः प्रयोजनाभावादिति चेन्न । उपदेशवदभ्यासस्योपपत्तिः । तथा हि—यथा छान्दोग्ये (६-८-७) 'तत्त्वमसी'त्युपदेशे नवकृत्वोऽभ्यस्यमानेऽपि न विद्या भिद्यत उपक्रमोपसंहारयोरविशेषात्, तद्वद् ब्राह्मणद्वयेऽपि प्रश्नरूपोपक्रमस्य 'अतोऽन्यदार्तम्' (बृ. ३-४-२, ३-५-१) इत्युपसंहारस्य चाविशेषान्न विद्याभेद इति सिद्धम् ॥ ३६ ॥

* २२ व्यतिहाराधिकरणम् *

पूर्वं यथाभ्यासस्यादरार्थत्वेन मतेरैक्यमवादि, तथा व्यतिहारोपदेशस्याप्यादरार्थत्वान्मतेरेकरूपत्वमस्तीति दृष्टान्तसङ्गत्येदमाह—

## व्यतिहारो विंशिषन्ति हीतरवत् ॥ ३७ ॥

अत्र पूर्वपक्षे मतेरैकरूप्ये लाघवं, सिद्धान्ते मतेर्द्वैरूप्ये व्यतिहारसार्थक्यमिति फलभेदः। ऐतरेयके श्रूयते—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति। तत्र किं व्यतिहारेण मतिरेकरूपा विधीयत उत द्विरूपेति विशये एकरूपेति पूर्वः पक्षः। सिद्धान्तस्तु व्यतिहारोऽत्रोपासनार्थमुपदिश्यते इतरवद्, यथेतरे सर्वात्मत्वादयो गुणा उपासनार्थमुपदिश्यन्ते तद्वत्। तथा हि विंशिषन्ति समाम्नातारः 'त्वमहमस्म्यह च त्वमसि' इत्युभयोच्चारणेन। तच्च विशेषणं द्विरूपायां मतौ कर्तव्यायामर्थवद् भवति। अन्यथा हीदं विशेषणोभयाम्नानमनर्थकं स्याद्। अतो मतिर्द्विरूपैवेति सिद्धम् ॥ ३७ ॥

* २४ सत्याद्यधिकरणम् *

पूर्वं जीवब्रह्मणोर्व्यतिहारोक्तिभेदाद्विद्याद्वैरूप्यं यथाभ्यधायि तथेहापि सत्यविद्यायां लोकाञ्जयति (बृ. ५-४-१) इति तदनन्तरविद्यायां 'हन्ति पाप्मानम्' (बृ. ५-५-३,४) इत्युभयत्र लोकजयपापनिवृत्तिरूपफलोक्तिभेदाद्विद्याभेद इति दृष्टान्तसङ्गत्येदमाह—

## सैव हि सत्यादयः ॥ ३८ ॥

अत्र पूर्वपक्षे गुणानामनुष्ठानव्यवस्था, सिद्धान्ते त्वनुष्ठानैक्यमिति फलभेदः। बृहदारण्यके (५-४-१) श्रूयते—'महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इति सत्यविद्यां विधाय तदनन्तरं 'तद्यत्तत्सत्यमसौ स आदित्यः' (५-५-२) इत्यादि। तत्र सत्यविद्यातस्तदनन्तरविद्या भिद्यते न वेति सन्देहे भिद्यत इति पूर्वः पक्षः। सिद्धान्तस्तु इयमनन्तरविद्या सैव सत्यविद्यैव, न ततो भिद्यते। कुतः, हिशब्दो हेतौ। 'तद्यत् तत् सत्यमि'ति प्रकृतस्यैवोपास्यस्य हिरण्यगर्भस्याकर्षणाद्धेतोः। न ह्युपास्याभेदे विद्याभेदो युक्तः। न च फलभेदाद्विद्याभेदो युक्त इति वाच्यम्। सत्यविद्याप्रकरणे पठितस्य फलस्य सर्वस्यापि सत्यविद्याफलत्वात्। अतो विद्यैक्यात् पूर्वापरवाक्यस्थाः सर्वे सत्यादयो गुणा उपसंहर्तव्या इति सिद्धम् ॥ ३८ ॥

* २५ कामाद्यधिकरणम् *

पूर्वं वेद्याभेदेन विद्यैक्याद् गुणोपसंहार इत्यभाणि। तद्वत्रापि छान्दोग्य दहराकाशस्यैवोपास्यत्वाद् वाजसनेयके [illegible]स्यात्मनो [illegible]

सगुणनिर्गुणविद्ययोर्भेदान्नोपसंहार इति प्रत्युदाहरणसङ्गत्येदमाह—

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

अत्र पूर्वपक्षे क्वचिदाकाशस्य ध्येयत्वं क्वचित् तदाश्रयस्य ज्ञेयत्वमिति विशेषसिद्धिः, सिद्धान्ते ब्रह्मण एवाकाशशब्दितत्वादुक्तविशेषासिद्धिरिति फलभेदः । छान्दोग्ये (८-१-१) 'दहरोऽस्मिन्नन्तराकाशः' इति श्रुतस्य दहराकाशस्य सत्यकामत्वादयो गुणा आम्नाताः, बृहदारण्यके (४-४-२२) तु 'य एषोऽन्तर्हृदय आकाशः' इत्यभिहितस्याकाशाश्रयस्य सर्ववशित्वादयो गुणाः । ते परस्परमुपसंहर्तव्या न वेति सन्देहे नोपसंहर्त्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु कामादि सत्यकामत्वादिगुणजातमितरत्र बृहदारण्यके उपसंहर्तव्यम् । यच्च सर्ववशित्वादिकं तदपि तत्र छान्दोग्ये उपसंहर्तव्यम् । कुतः, आयतनादिभ्य उभयत्राविशिष्टेभ्यो हृदयायतनसेतुत्वव्यपदेशादिभ्यो हेतुभ्यः । नन्वेवं वेद्याभेदेऽपि सगुणनिर्गुणत्वेन विद्ययोर्भेदात् कथमुपसंहार इति चेद् बाढम् । न वयमुपासनार्थमुपसंहारं ब्रूमः, अपि तु विद्यास्तुत्यर्थं, येन विद्याभेदे गुणोपसंहारो न स्यात् । अतो न काचनानुपपत्तिरिति ॥ ३९ ॥

* २६ अलोपाधिकरणम् *

पूर्वं विद्याभेदेऽपि स्तुत्यर्थत्वेन गुणोपसंहारो यथाभ्यधायि, तथा भोजनलोपेऽपि पूर्वभोजनस्तुत्युपपत्त्यर्थं प्राणाग्निहोत्र इति दृष्टान्तसङ्गत्येदमाह—

## आदरादलोपः ॥ ४० ॥

अत्र पूर्वपक्षे प्रतिनिधिन्यायेन प्राणाग्निहोत्रकर्तव्यतावश्यकत्वं, सिद्धान्ते तदनवतारात् तदनावश्यकत्वमिति फलभेदः । छान्दोग्ये (५-१९-१) वैश्वानरविद्यायां प्राणाग्निहोत्रं श्रूयते—'स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा' इत्यादिना । तत्र किं भोजनलोपे प्राणाग्निहोत्रस्य लोप उतालोप इति सन्देहे भोजनलोपेऽग्निहोत्रस्यालोपः । कुतः, 'पूर्वोऽतिथिभ्योऽश्नीयाद्' इति जाबालश्रुत्या पूर्वभोजनस्य प्राथम्यरूपधर्मकोपमसहमानया प्राणाग्निहोत्रे आदरकरणात् । नहि धर्मकोपमसहमाना श्रुतिर्धर्मिणः प्राणाग्निहोत्रस्य लोपं सहते । अतोऽलोप इति पूर्वः पक्षः ॥ ४० ॥

सिद्धान्तस्तु—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

भोजने चोपस्थिते अतोऽस्मादेव भोजनद्रव्यात् प्राणाग्निहोत्रं कर्तव्यम्, अनुपस्थिते त्वग्निहोत्रस्य लोप एव। कुतः, तद्वचनात्। 'तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयम्' (छा. ५-१९-१) इति वचनात्। आदरवचनं तु भोजनप्रसक्तिदशायां द्रष्टव्यम् ॥ ४१ ॥

* २७ तन्निर्धारणाधिकरणम् *

पूर्वमनित्यभोजनाश्रितप्राणाग्निहोत्रस्यानित्यत्वं यथा, तद्वन्नित्यकर्माङ्गाश्रितोपासनानां नित्यत्वमिति दृष्टान्तसङ्गत्येदमाह—

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

अत्र पूर्वपक्षे उपासनानां क्रतुपु पर्णतादिवदावश्यकत्व, सिद्धान्ते गोदोहनवदनावश्यकत्वमिति फलभेदः। सन्ति कर्माङ्गोद्गीथव्यपाश्रयाणि प्राणाद्युपासनानि। किं तेषां नित्यवदनुष्ठानमुत नेति सन्देहे नित्यवदनुष्ठानमिति पूर्वः पक्षः। सिद्धान्तस्तु तेषां कर्माङ्गाश्रितानां निर्धारणानामुपासनानामनियमः नित्यवदनुष्ठानाभावः। कुतः, तद्दृष्टेः, तस्यानियमस्य 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा. १-१-१०) इति श्रुतौ दर्शनात्। उपासनानां पृथक् फलश्रवणादपि न नित्यवदनुष्ठानमित्याह— पृथग्घ्यप्रतिबन्धः फलम्। हि यस्मात् कर्मफलतः पृथगेवाप्रतिबन्धः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) इति वीर्यवत्तरत्वात्मककर्मसमृद्धिरूपः फलमुपलभ्यते। अतो न कर्माङ्गत्वमुपासनानामिति सिद्धम् ॥ ४२ ॥

* २८ प्रदानाधिकरणम् *

पूर्वं फलभेदात् कर्माङ्गानां तदाश्रितोपासनानां च नित्यत्वानित्यत्वलक्षणः प्रयोगभेदोऽभाणि। तद्वत्र वायुप्राप्तिलक्षणफलैक्याद्वायुप्राणयोः स्वरूपाभेदाद् ध्यानप्रयोगाभेद इति प्रत्युदाहरणसङ्गत्येदमाह—

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

अत्र पूर्वपक्षे विद्यैक्यात् प्रयोगभेदासिद्धिः, सिद्धान्ते तदैक्येऽपि गुणभेदतस्तत्सिद्धिरिति फलभेदः। बृहदारण्यके छान्दोग्ये च संवर्गविद्यायां वागादिभ्यः प्राणः श्रेष्ठः अग्न्यादिभ्यो वायुः श्रेष्ठ इत्यवधारितम्। तत्र किमस्यां विद्यायां वायुप्राणयोः प्रयोगैक्यमुत प्रयोगभेद इति सन्देहे प्रयोगैक्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु प्रदानवदेव, 'यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इतीन्द्रदेवताया एकत्वेऽपि राजाधिराजादिगुणभेदेन तद्विशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदः, तद्वदेकस्यामपि विद्यायां वायुप्राणयोः स्वरूपाभेदेऽप्याध्यात्मिकाधिदैविकत्वरूपावस्थाभेदेन गुणभेदात् प्रयोगभेद इति । तदुक्तं देवताकाण्डे—'नाना वा देवता पृथग ज्ञानाद्' इति ॥ ४३ ॥

* २९ लिङ्गभूयस्त्वाधिकरणम् *

पूर्वमेकप्रयोगायोगाद्वायुप्राणयोः प्रयोगभेदो गदितः । तर्हि मनश्चिदादीनां प्रकरणात् कर्माङ्गत्वेनैकप्रयोगसम्भवात् प्रयोगाभेद इति प्रत्युदाहरणसङ्गत्येदमाह—

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥

अत्र पूर्वपक्षे क्रियार्थानामग्नीनां क्रियाङ्गत्वं, सिद्धान्ते पुमर्थानां तेषां केवलविद्यामयत्वमिति फलभेदः । वाजसनेयकेऽग्निरहस्ये 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इत्यादि, तथैव 'वाक्चितः प्राणचित' इत्यादि, मनश्चिदादयोऽग्नयः श्रूयन्ते । तत्र किमेते कर्माङ्गभूता उत स्वतन्त्रा इति सन्देहे कर्माङ्गभूता इति पूर्वः पक्षः । सिद्धान्तस्तु एते स्वतन्त्रा एव । कुतः, लिङ्गभूयस्त्वात् 'यत् किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ती'त्यादिस्वातन्त्र्यज्ञापकलिङ्गानां भूयसां सत्त्वात् । तद्धि लिङ्गं प्रकरणाद्बलीयः । तदपि बलीयस्त्वमुक्तं पूर्वकाण्डे—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षाद्' (जै. सू. ३-३-१४) इति ॥ ४४ ॥

इत्थं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

## पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥

• सङ्कल्पात्मका मनश्चिदादयोऽग्नयो न स्वतन्त्राः । किन्तु 'इष्टकाभिरग्निं चिनुते' इति प्रकृतस्य पूर्वस्य क्रियामयस्याग्नेरयं विकल्पः सङ्कल्पात्मकोऽग्निः प्रकरणात् क्रिया क्रियामय एव स्यात् । न च लिङ्गादग्नीनां स्वातन्त्र्यं तस्य लिङ्गस्य मानसिकाग्निस्तुतिपरत्वेन विध्येकवाक्यतया स्वार्थपरत्वाभावान्न प्रकरणबाधकत्वम् । तस्मात् क्रियानुप्रवेशिन एतेऽग्नयो मानसवद् । यथा द्वादशाहे 'मनोग्रहं गृह्णाती'ति श्रुतो मानसग्रहो द्वादशाहमध्यपातिनो दशमस्याह्नोऽङ्गं, तथेमेऽग्नयः प्रकृतकर्मशेषा इत्यर्थः ॥ ४५ ॥

---

१. 'शतसहस्राणि' इति मुद्रितभाष्यादिषु पाठः.

## अतिदेशाच्च ॥ ४६ ॥

मानसिकाग्नीनां मध्ये 'एकोऽग्निस्तावान् यावानसौ पूर्व'[1] इति पूर्वेणेष्टकाचितेनाग्निना साम्पादिकाग्नीनां सादृश्योपदेशाच्च तच्छेषत्वमित्यर्थः ॥ ४६ ॥

इत्थं पूर्वपक्षे सिद्धान्तयति—

## विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुः पूर्वपक्षनिरासार्थः । विद्यात्मका एते मनश्चिदादयः स्वतन्त्रा एव, न कर्मानुप्रवेशिनः । कुतः, 'ते हैते विद्याचित एव' इत्यवधारणादित्यर्थः । एवकारश्रुत्या कर्मप्रकरणं बाध्यमिति भावः ॥ ४७ ॥

लिङ्गादपि तद्बाध्यमित्याह—

## दर्शनाच्च ॥ ४८ ॥

मनश्चिदादीनां स्वातन्त्र्यज्ञापकलिङ्गस्य प्रागुक्तस्य दर्शनाच्चेत्यर्थः ॥ ४८ ॥

वाक्यादपि तद् बाध्यमित्याह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

आदिशब्देन लिङ्गवाक्ययोर्ग्रहणम् । श्रुतिलिङ्गे प्राग् दर्शिते । 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इत्येतद्वाक्यं मनश्चिदादीनां स्वातन्त्र्यं बोधयत् प्रकरणं बाधयति । तथा चैतेषां श्रुतिलिङ्गवाक्यानां बलीयस्त्वाद् दुर्बलेन कर्मप्रकरणेन न मनश्चिदादीनां स्वातन्त्र्यबाध इत्यर्थः । यत्तु लिङ्गस्य स्तुतिपरत्वं तन्न । तस्य विधिप्रत्ययसामीप्याभावादपूर्वार्थविधायकत्वाभावादिति भावः ॥ ४९ ॥

इतोऽपि मनश्चिदादीनां स्वातन्त्र्यमित्याह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५० ॥

'ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैव ग्रहा अगृह्यन्त' इत्यादिना मनआदिषु वृत्तिषु कर्माङ्गानामनुबन्धात् संपादनादग्नीनां स्वातन्त्र्यं, कर्माङ्गत्वेऽङ्गानां प्रत्यक्षसिद्धत्वेन संपादनवैयर्थ्यात् । आदिशब्देनातिदेशो गृह्यते । यस्त्वयमतिदेशः पूर्वपक्षानुकूल इति, तन्न, अग्नित्वसादृश्येनातिदेशस्य सिद्धान्तेऽप्युपपत्तेः । सूत्रे बहुवचनसिद्ध्यर्थं पूर्वोक्तश्रुतिलिङ्गादिकं बोध्यम् । एवञ्चानुबन्धादिभ्यो हेतुभ्यः

१. 'एकैक एव तावान्' इति मुद्रितभाष्यादिषु पाठः.

स्वातन्त्र्यं मनश्चिदादीनां प्रज्ञान्तरपृथक्त्ववद् । यथा प्रज्ञान्तराणां शाण्डिल्यादिविद्यानां स्वातन्त्र्यं तद्वत् । ननु मनश्चिदादीनां स्वातन्त्र्ये कर्मप्रकरणादुत्कर्षे को दृष्टान्त इत्यत आह— दृष्टश्च । राजसूयं प्रस्तुत्य श्रुताया अवेष्टेर्ब्राह्मणादिकर्तृकाया राजमात्रकर्तृकराजसूयप्रकरणादुत्कर्षो दृष्टः, तद्वदिहाप्यग्नीनां कर्मप्रकरणादुत्कर्ष इति । तदुक्तं प्रथमे काण्डे —'क्रत्वर्थायामिति चेन्न वर्णसंयोगात्' (जै. सू. ११-४-११) इति ॥ ५० ॥

यदवादि पूर्ववादिना मानसवन्मनश्चिदादीनां क्रियाशेषत्वमिति तद्विघटयति —

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

मनश्चिदादीनां मानसत्वसामान्यादपि न क्रियाशेषत्वं कल्प्यम्, उक्तश्रुत्यादिभ्यः स्वातन्त्र्योपलब्धेर्मृत्युवद् । यथा 'स वा एष एव मृत्युर्य एष तस्मिन् मण्डले पुरुष' इति 'अग्निर्वै मृत्युः' (बृ. ३-२-१०) इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः, यथा वा 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्' (छा. ५-४-१) इत्यादौ समिदादिसाम्यान्न द्युलोकस्याग्नित्वापत्तिः, अपि तु परस्परवैषम्यं, तद्वन्मानसमानसिकाग्न्योर्मानसिकत्वसाम्येऽपि परस्परवैषम्यमित्यर्थः ॥ ५१ ॥

पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानान्मध्यस्थस्यापि ब्राह्मणस्य स्वतन्त्रविधाविधिपरत्वमाह —

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

मानसिकाग्निब्राह्मणात् परेण ब्राह्मणेन शब्दस्य ताद्विध्यं चितेऽग्नौ लोकदृष्टिरूपस्वतन्त्रविद्याविधित्वमेव प्रतीयते । चकारात् पूर्वेणापि ब्राह्मणेन मण्डलपुरुषोपास्तिरूपस्वतन्त्रविद्याविधित्वमेव दृश्यते । तत्सान्निध्यान्मध्यस्थेनापि ब्राह्मणेन मानसाग्नीनां स्वतन्त्रविद्यात्वं बोध्यम् । ननु तर्हि कस्मात् क्रियाग्निना सहपाठ इत्यत आह — भूयस्त्वात् त्वनुबन्धः । तुः शङ्कानिरासार्थः । कर्माङ्गानां मानसाग्निविद्यायां सम्पाद्यानां बहुत्वाद् विद्यायाः क्रियाग्निनानुबन्धः सहपाठः । तस्मादियं मानसाग्निविद्या स्वतन्त्रपुरुषार्थे हेतुरिति सिद्धम् ॥ ५२ ॥

---

१. 'स्यर्षः क दृष्टः' क पुस्तके पाठः. २. 'प्रकृत्य' ख पुस्तके पाठः. ३. 'नसत्व' ख पुस्तके

* ३० ऐकात्म्याधिकरणम् *

ननु विद्यायाः पुरुषार्थहेतुत्वमयुक्तं देहातिरिक्तस्य पुरुषस्याभावादित्याक्षेपसङ्गत्येदमाह—

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

प्रसङ्गादस्य पादसङ्गतिर्बोध्या । फल तु पूर्वपक्षे देहातिरिक्तात्माभावात् स्वर्गादिशास्त्रवैयर्थ्यं, सिद्धान्ते तत्सार्थक्यमिति द्रष्टव्यम् । अत्रात्मा विषयः । स किं देह उत तदतिरिक्त इति संशये तत्रैके लोकायतिकाः शरीरातिरिक्तस्यात्मनोऽसत्त्वं मन्यमानाः शरीरमेवात्मेत्याचक्षते । कुतः, शरीरे सत्युपलब्धेर्भावात् तदभावे चाभावादित्यन्वयव्यतिरेकाभ्यां तस्याः शरीरधर्मत्वेनातिरिक्तात्मासिद्धेरिति पूर्वः पक्षः ॥ ९३ ॥

सिद्धान्तस्तु—

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥

न त्वात्मनः शरीरादव्यतिरेकः, किन्तु व्यतिरेक एव । कुतः, तस्य शरीरस्य मरणावस्थायां भावेऽप्युपलब्धिरूपात्मधर्मस्याभावित्वात्, पतने च तस्य शरीरस्य शरीरान्तरावच्छेदेन तद्धर्मस्य भावित्वान्न शरीरधर्मत्वम् । उपलब्धिवद् । यथा भूतोपलब्धिर्न तद्धर्मस्ततो व्यतिरिच्यते, तथा भौतिकदेहोपलब्धिर्न तद्धर्मस्ततो व्यतिरिच्यते । सैवोपलब्धिरस्माकमात्मेति देहव्यतिरिक्तस्यात्मनः सत्त्वमिति सिद्धम् ॥ ९४ ॥

* ३१ अङ्गावबद्धाधिकरणम् *

पूर्वं यथा शरीरात्मनोर्भेदादात्मधर्मस्य शरीरे न सम्भवः, तद्वदेकशाखागतोद्गीथाद्यपेक्षया शाखान्तरगतोद्गीथादेः स्वरभेदेन भेदादेकशाखागतोद्गीथादिधर्माणां शाखान्तरगतोद्गीथादौ न सम्भव इति दृष्टान्तसङ्गत्येदमाह—

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

अत्र पूर्वपक्षे अनुष्ठानव्यवस्था, सिद्धान्ते तदव्यवस्थेति फलभेदः । सन्ति कर्माङ्गाश्रिता उपासना उद्गीथावयव ओङ्कारे प्राणदृष्टि,रुद्गीथे पृथिवीदृष्टिः, पञ्चविधे साम्नि पृथिव्यादिदृष्टिरित्येवमाद्याः । ताः किं यत्र शाखायां विहितास्तच्छाखागतोद्गीथाद्यालम्बना उत सर्वशाखागतोद्गीथाद्यालम्बना इति सन्देहे तच्छाखागतोद्गीथाद्या-

---

१. 'गोपवर्गादि' खपुस्तके पाठः. २. 'एव त' कपुस्तके पाठ.. ३. 'विशये' खपुस्तके पाठः

लम्बना इति पूर्वः पक्षः । सिद्धान्तस्तु सौत्रतुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अङ्गावबद्धा अङ्गाश्रिता एता उपासनाः प्रतिवेद स्वस्वशाखासु विद्यमानोद्गीथाद्यालम्बना एव न भवन्ति, किन्तु शाखान्तरीयोद्गीथाद्यालम्बना अपि । कस्माद् । हिशब्दो हेतौ 'उद्गीथमुपासीत' (छा. १-१-१) इत्यादावुद्गीथादिश्रुतेरविशेषाद्धेतोरित्यर्थः ॥ ५५ ॥

इममर्थं दृष्टान्तमुखेनापि स्पष्टयति—

## मन्त्रादिवद्वाविरोधः ॥ ५६ ॥

एकशाखाविहितोद्गीथादीनां शाखान्तरगतोद्गीथादिषु प्राप्तेरविरोधो मन्त्रवद् । यथा तण्डुलपेषणार्थमश्मादानमन्त्रस्य 'कुटरुरसी'त्येकत्राम्नातस्य शाखान्तरेऽपि प्राप्तेरविरोधः, तद्वत् । वाशब्दो दृष्टान्तप्रदर्शनरूपहेत्वन्तरप्रदर्शनार्थः ॥ ५६ ॥

* ३२ भूमज्यायस्त्वाधिकरणम् *

पूर्वं यथोद्गीथादिश्रुत्या सन्निधिप्राप्तव्यवस्थां बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखासु व्यवस्था स्थापिता, तद्वदिहापि व्यवस्था व्यस्तोपास्तीना विधिश्रुत्या समस्तोपास्तिसान्निधिप्राप्तं स्तुत्यर्थत्वं बाधित्वेति दृष्टान्तसङ्गत्येदमाह—

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

अत्र पूर्वपक्षे वाक्यभेदः, सिद्धान्ते तैदक्यमिति फलविवेकः । वैश्वानराख्यायिकायां द्युलोकसूर्यवाय्वादिषु व्यस्तेषु तथा समस्तेष्वपि मूर्धचक्षुःप्राणादिषु वैश्वानरोपास्तिः श्रुता । सा किमिहोभयथोपास्तिर्विवक्षिता उत समस्तोपास्तिरेवेति विशय उभयथोपास्तिरिति पूर्वः पक्षः । सिद्धान्तस्तु भूम्नः समस्तोपासनस्यैवास्मिन् वाक्ये ज्यायस्त्वं प्राधान्येन प्रतिपाद्यत्वं, न व्यस्तोपास्तीनामपि । क्रतुवद्, यथा दर्शपूर्णमासादेः क्रतोः साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्ष्यते न व्यस्तानामपि प्रयाजादीनां तद्वत् । ननु भूम्न एव ज्यायस्त्वं कस्मादित्यत आह— तथा हि दर्शयति । प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि निन्दित्वा कैकेयेन राज्ञा समस्तोपासनस्योक्तत्वादेकवाक्यता श्रुतेरवगम्यते । एवञ्चैकवाक्यतामापन्नेयं श्रुतिर्भूम्न एव ज्यायस्त्वं दर्शयति । ननु 'कं त्वमात्मानमुपास्से' (छा. ५ १२-१) इत्यादिव्यस्तोपास्तिश्रुतीनां का गतिरिति चेत् । न । व्यस्तोपासनानुवादेन समस्तोपासनस्य विधेयत्वादनुवादैकत्वमेव गतिरित्यतः समस्तोपासनमेव ज्याय इति सिद्धम् ॥ ५७ ॥

---

१. 'स्तिविधिश्रु' खपुस्तके पाठः. २. 'दत्व' कपुस्तके पाठः.

* ३३ नानाशब्दाधिकरणम् *

पूर्वं यथा व्यस्तोपास्तिषु विधिश्रुतीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्वमुक्तं, तथैकोपास्यकोपास्तिषु प्रत्येकं विधीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्वमिति नास्ति विद्यानां भेद इति दृष्टान्तसङ्गत्येदमाह—

## नाना शब्दादिभेदात् ॥ ५८ ॥

फलं पूर्ववत् । सन्ति सगुणब्रह्मैकवेद्याः शाण्डिल्यादिविद्याः । तथैव मुख्यप्राणविद्या अपि । ताः किं नाना उताभिन्ना इति सन्देहे अभिन्ना इति पूर्वः पक्षः । सिद्धान्तस्तु विद्या नानैव भिन्ना एव । कुतः, शब्दादिभेदाद् 'वेद' 'उपासीत' 'क्रतुं कुर्वीत' इति शब्दभेदाद् आदिशब्देनोपास्यगुणभेदाच्चेत्यर्थः ॥ ५८ ॥

* ३४ विकल्पाधिकरणम् *

पूर्वत्र विद्यानानात्वे सिद्धेऽयं विचारः प्रवर्तत इति हेतुहेतुमद्भावसङ्गत्येदमाह—

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

अत्र पूर्वपक्षे यथेच्छमनुष्ठानमित्यनियमः, सिद्धान्ते विकल्पेनानुष्ठानमिति नियम इति फलभेदः । याः सगुणब्रह्मविद्या वेद्यसाक्षात्कारेण फलहेतवः, किं तासां विकल्पसमुच्चयाभ्यामनुष्ठानमुत विकल्प एवेति सशये नियामकाभावात् स्वेच्छयैवेति पूर्वः पक्षः । सिद्धान्तस्तु विकल्प एवासां विद्यानां युक्तः । कुतः, अविशिष्टफलत्वाद् वेद्यसाक्षात्काराख्याभिन्नफलत्वादित्यर्थः ॥ ५९ ॥

* ३५ काम्याधिकरणम् *

पूर्वमहङ्ग्रहोपास्तीनां विकल्पेनैवानुष्ठेयत्वमभाणि । तद्वदुपास्तित्वाविशेषात् प्रतीकोपास्तीनामपि विकल्पेनैवानुष्ठेयत्वं स्यादिति दृष्टान्तसङ्गत्येदमाह—

## काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ६० ॥

अत्र पूर्वपक्षे व्रीह्यादिष्विवानुष्ठाननियमः, सिद्धान्ते फलवशादनियम इति फलभेदः । याश्च प्रतीकोपास्तयो 'नाम ब्रह्मेत्युपासीत' (छा. ७-१-५) इत्यादिकाः, तासु किं विकल्प उत यथाकाममनुष्ठानमिति विशये विकल्प एवेति पूर्वः पक्षः । सिद्धान्तस्तु काम्यास्तु अदृष्टद्वारा फलहेतवो विद्या यथाकामं समुच्चीयेरन्

वा, न वा समुच्चीयेरन् । कुतः, पूर्वहेतोरविशिष्टफलत्वस्य विकल्पप्रयोजकस्यात्राभावादित्यर्थः ॥ ६० ॥

* ३६ यथाश्रयभावाधिकरणम्

पूर्वं यथा प्रतीकोपास्तीनां स्वतन्त्रत्वाद्यथाकाममनुष्ठानं, न तथेहाङ्गाश्रितोपास्तीनामङ्गतन्त्रत्वादिति प्रत्युदाहरणसङ्गत्येदमाह—

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

अत्र पूर्वपक्षे समुच्चयानुष्ठानात् फलबाहुल्यं, सिद्धान्ते यथाकाममनुष्ठानात् प्रयोगसौकर्यमिति फलभेदः । याश्च कर्माङ्गोद्गीथाश्रिता विद्याः, तासु समुच्चयेनैवानुष्ठानम् उत यथाकाममिति विशये पूर्वः पक्षः । अङ्गेषु यथाश्रयभावः । यथा क्रतुष्वाश्रितानामङ्गानां समुच्चित्यानुष्ठाननियमः, तथाङ्गेष्वाश्रितानामुपास्तीनामाश्रयभावः समुच्चित्यानुष्ठाननियम इत्यर्थः ॥ ६१ ॥

ननु तर्हि गोदोहनस्यापि समुच्चयनियमः स्यादित्यत आह—

## शिष्टेश्च ॥ ६२ ॥

शिष्टेः शासनाद्विधानाद्विहितत्वाविशेषादङ्गवत्समुच्चय इत्यर्थः । गोदोहनस्य चमसे विहितत्वान्न समुच्चयानुष्ठाननियमः । उपास्तीनां तु कस्यचिदङ्गस्य स्थानेऽविहितत्वात् समुच्चयनियमो न विरुद्ध इति भावः ॥ ६२ ॥

समुच्चये लिङ्गमाह—

## समाहारात् ॥ ६३ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' (छा. १-५-५) इति ऋग्वेदोक्तप्रणवस्य सामवेदोक्तोद्गीथेनैक्योपास्तिबलादुद्गात्रा प्रमादाद् दुष्टस्याप्युद्गीथस्य सम्यक्कृतहोतृशंसनतः समाहारान्निर्दोषत्वकरणादित्यर्थः । एवञ्च वेदद्वयोक्तप्रणवोद्गीथयोरैक्यज्ञानस्यैतादृशं फलं ब्रुवद्वाक्य सर्ववेदोक्तानामप्यङ्गाश्रितोपास्तीनां सम्बन्धसामान्यात् समुच्चये लिङ्गमिति भावः ॥ ६३ ॥

लिङ्गान्तरमाह—

## गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

'तेनेयं त्रयी विद्या वर्तते' (छा. १-१-९) तेन ओङ्कारेण वेदत्रयोक्त कर्म भवतीत्युद्गीथोपास्तौ गुणभूतस्योपास्यस्योङ्कारस्य सर्वकर्मणि साधारण्यश्रवणात् तदाश्रितोपास्तीनामपि साधारण्यं समुच्चयानुष्ठानमित्यर्थ ॥

'दृश्यत इ' खपुस्तके पाठः.

यद्वा–

गुणसाधारण्यश्रुतेश्च ।

यदि सर्वेषां धर्मगुणानामुद्गीथादीनां समुच्चित्यानुष्ठानात्मकसाधारण्यं न स्यात् तर्हि तदाश्रितोपास्तीनामपि समुच्चित्यानुष्ठान न स्यात् । न त्वेतदस्ति । प्रयोगवचनेन सर्वाङ्गग्राहिणा तेषां साधारण्यश्रवणात् । ततश्च तदाश्रितोपास्तीनामपि साधारण्यमित्यर्थः ॥ ६४ ॥

एवं पूर्वपक्षे सिद्धान्तः—

## न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

वाशब्दस्त्वर्थः पूर्वपक्षनिरासार्थः । नाङ्गाश्रितोपास्तीनामङ्गवत् समुच्चयनियमः । कुतः, तत्सहभावाश्रुतेः, 'ग्रहं वा गृहीत्वा' इत्यादिना यथाङ्गानां सहभावः श्रूयते तद्वत् तासामुपास्तीनां सहभावस्याश्रुतेः । न चाङ्गतन्त्रत्वादुपास्तीनां समुच्चयनियम इति साम्प्रतम् । अङ्गतन्त्रस्यापि गोदोहनस्यानुष्ठानानियमादिति दिक् ॥ ६५ ॥

## दर्शनाच्च ॥ ६६ ॥

'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' (छा. ४-१७-१०) इति श्रुतावङ्गाश्रितोपास्तीनामसमुच्चयदर्शनादिति शोभनम् ॥ ६६ ॥

अस्मिन् पादे षट्त्रिंशदधिकरणानि । सूत्राणि षट्षष्टिः ।

इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
तृतीयाध्यायस्य तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

१ पुरुषार्थाधिकरणम् *

इत्थं पूर्वस्मिन् पादे परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधारितम् । इह तु तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वं निरूपयितुं तासां यज्ञादीनि बहिरङ्गाणि शमादीन्यन्तरङ्गाणि च निरूप्यन्त इत्येकविद्याविषयकत्वलक्षणसङ्गत्याय चतुर्थः पाद आरभ्यते । पूर्वपादान्त्याधिकरणे कर्माङ्गविद्योक्ता । तत्प्रसङ्गाद् ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्क्य समाधत्त इति प्रसङ्गसङ्गत्येदमधिकरणमाह–

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अत्र पूर्वपक्षे ज्ञानकर्मणोरङ्गाङ्गित्वेन समुच्चयः, सिद्धान्ते केवलज्ञानान्मुक्तिरिति फलभेदः । अत्र परब्रह्मविद्या विषयः । सा कर्तृद्वारा क्रत्वनुप्रवेशिनी उत स्वतन्त्रैव पुरुषार्थसाधिकेति विशये क्रत्वनुप्रवेशिनीति पूर्वः पक्षः । सिद्धान्तस्तु अतोऽस्मादौपनिषदात्मज्ञानात् स्वतन्त्रात् पुरुषार्थो मोक्षः सिध्यतीति बादरायण आचार्यो मन्यते । कुतः, 'तरति शोकमात्मवित्' (छा. ७-१-३) 'ब्रह्म वेद ब्रह्मैव भवति' (मु. ३-२-९) इत्यादेः केवलाया विद्याया मोक्षहेतुत्वबोधकशब्दादित्यर्थः । इदमुपलक्षणम् । सगुणविद्यानामपि स्वातन्त्र्येण फलहेतुत्वं तत्तत्फलश्रुतेरिति बोध्यम् ॥ १ ॥

इत्थं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

## शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

कर्तृत्वेनात्मनः कर्मशेषत्वात् तज्ज्ञानमपि पर्णतावत् कर्मशेषात्मद्वारा क्रत्वङ्गं फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् । ननु विशेषणासिद्धो हेतुः 'तरति शोकमात्मविदि'त्यादिफलश्रुतेरित्यत आह – पुरुषेत्यादि । यथान्येषु द्रव्यसंस्कारकर्मसु अपापश्लोकश्रवणादिफलश्रुतिरर्थवादः, तथात्रापि पुरुषार्थश्रुतिरर्थवाद इति जैमिनिराचार्यो मन्यते । ततश्च न हेतोर्विशेषणासिद्धिरिति भावः ॥ २ ॥

## आचारदर्शनात् ॥ ३ ॥

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृ. ३-१-१) इत्यादौ ब्रह्मविदां जनकादीनां विद्यया सह कर्माचारदर्शनाद्विद्यायाः कर्माङ्गत्वमित्यर्थः ॥ ३ ॥

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १-१-१०) इति तृतीयाश्रुत्या विद्यायाः तस्य कर्मशेषत्वस्य श्रवणादित्यर्थः ॥ ४ ॥

## समन्वारम्भणात् ॥ ५ ॥

---

१ 'वलविद्या' कपुस्तके पाठ. २. 'ह्मवादिना जन' खपुस्तके पाठः

'तं विद्याकर्मणी समन्वारभेते' (बृ. ४-४-२) इति च फलारम्भे विद्याकर्मणोः साहित्यदर्शनाद् विद्यायाः कर्माङ्गत्वमित्यर्थः ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य' (छा. ८-१५-१) इत्यादिश्रुत्या सकलवेदार्थज्ञानविद्यावतः कर्मविधानादपि लिङ्गात् कर्माङ्गत्वं विद्याया इत्यर्थः ॥ ६ ॥

नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ई. २) इत्यादिकाद् यावज्जीवं कर्माचारनियमाच्च ब्रह्मविद्यायाः कर्मशेषत्वमेवेत्यर्थः ॥ ७ ॥

इत्थं षड्भिः सूत्रैः पूर्वपक्षे प्राप्ते दशभिः सूत्रैः सिद्धान्तयति—

अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुः पूर्वपक्षनिरासार्थः । यदवादि पूर्ववादिना तत्त्वज्ञानं कर्माङ्गं फलशून्यत्वे सति कर्माङ्गाश्रयत्वादिति तन्न । हेतोर्विशेष्यासिद्धेः । कस्माद्विशेष्यासिद्धिः, अधिकोपदेशात् । यः कर्मकर्त्ता तदङ्गभूतः सन् संसारी तस्मादधिकस्याकर्तुरसंसारिणश्चिन्मात्रस्य वेदान्तेषूपदेशात् । ततश्च तत्त्वज्ञानं चिन्मात्राश्रयमेवेति भवति विशेष्यासिद्धिः । एवञ्च तत्त्वज्ञानफलश्रुतेर्नार्थवादत्वम् । तस्माद् एवं, यन्मतं भगवतो बादरायणस्य तत् तथैवेति व्यवस्थितम् । न चाधिकोपदेशासिद्धिरिति साम्प्रतं, तद्दर्शनात् तस्याधिकस्य चिन्मात्रस्य 'यः सर्वज्ञः सर्ववित्' (मु. १-१-९) इत्यादिश्रुतिसहस्रेषु दर्शनादित्यर्थः ॥ ८ ॥

यदुक्तमाचारदर्शनादिति तत्राह—

तुल्यं तु दर्शनम् ॥ ९ ॥

तत्त्वज्ञानस्य कर्मशेषत्वाभावेऽप्याचारदर्शनं तुल्यमेव 'एतद्ध स्म वै तत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे' इत्यादिका श्रुतिरात्मविदां कर्माचाराभावं दर्शयति । तुशब्देनाकर्माङ्गलिङ्गदर्शनस्य प्राबल्यं सूचितम् । जनकादीनां त्वहममभिमानाभावेन तत्कृतकर्मणोऽकर्मतया तदाचारदर्शनस्य दौर्बल्यमिति ध्येयम् ॥ ९ ॥

---

१. 'इति फ' खपुस्तके पाठः. २. 'नादपि वि' खपुस्तके पाठः. ३. 'नवतः' खपुस्तके पाठः ४. 'तत्तद्ज्ञा' कपुस्तके पाठः. ५. 'गुणत्वे' खपुस्तके पाठः.

यदुक्तं 'तच्छ्रुतेरि'ति तत्राह—

असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोति' (छा. १-१-१०) इति श्रुतिरसार्वत्रिकी सर्वविद्याविषया न भवति प्रकृतोद्गीथविद्यामात्रपरत्वात् । ततश्च न श्रुतिबलाद् ब्रह्मविद्यायाः कर्माङ्गत्वसिद्धिरित्यर्थः ॥ १० ॥

यदपि 'समन्वारम्भणादि'ति तत्राह—

विभागः शतवत् ॥ ११ ॥

'तं विद्याकर्मणी समन्वारभेते' (बृ. ४-४-२) इत्यत्र विद्यान्यं[1] पुरुषमन्वारभते कर्मान्यमिति विभागो द्रष्टव्यः । शतवद् यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वदित्यर्थः । एवञ्चास्य[2] समन्वारम्भणवाक्यस्य संसारविषयता[3], न मोक्षविषयतेति भावः ॥ ११॥

यच्च 'तद्वतो विधानादि'ति तत्राह—

अध्ययनमात्रवतः ॥ १२ ॥

'आचार्यकुलाद्वेदमधीत्य' (छा. ८-१५-१) इति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते नौपनिषदात्मज्ञानवत इत्यर्थः ॥ १२ ॥

यत्तु 'नियमाच्चे'ति तत्राह—

नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि' (ई. २) इति वाक्यं न तत्त्वविद्विषयं विद्वानिति विशेषाभावादित्यर्थः ॥ १३ ॥

यद्वा—

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

इयं तत्त्वविदः कर्मानुमतिः कर्मानुज्ञा ब्रह्मविद्यास्तुतये ज्ञातव्या । स्तुतिश्चैवं— यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि विद्यासामर्थ्यात् कर्मलेपो[4] न भवतीति बोध्यम् ॥ १४ ॥

किञ्च—

---

१. 'न्यम' कपुस्तके पाठः २. 'एवमस्य' कपुस्तके पाठः. ३. 'यतया न' खपुस्तके पाठः. ४. 'कर्मलेपाय न' खपुस्तके पाठ..

## कामकारेण चैके ॥ १५ ॥

एके विद्वांसः प्रत्यक्षीकृततत्त्वज्ञानफलाः परोक्षफलकर्मसाधनं प्रजादिकं कामकारेण स्वेच्छया त्यक्तवन्त इति श्रूयते 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते' (बृ. ४-४-२२) इत्यादिना । तदनेन तत्त्वज्ञानस्य कर्माङ्गत्वाभावे तत्त्वविदां स्वेच्छया प्रजादित्यागो लिङ्गं सूचितमिति बोध्यम् ॥ १५ ॥

अपि च—

## उपमर्दञ्च ॥ १६ ॥

कर्मानुष्ठानहेतोः क्रियाकारकफलविभागस्य समस्तस्याविद्याकृतस्य विद्यासामर्थ्यादुपमर्दमभावमामनन्ति । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येद्' (बृ. २-४-१४) इत्यादिना । तथा च ब्रह्मविद्यायाः कर्मविरोधित्वान्न कर्माङ्गत्वमिति भावः ॥ १६ ॥

ब्रह्मविद्यायाः कर्मानङ्गत्वे हेत्वन्तरमाह—

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्सु यतिषु हि ब्रह्मविद्यावगता । न हि तस्याः कर्माङ्गत्वं सम्भवति, तेषां कर्माभावात् । न च यत्याश्रमः क्वापि न श्रुत इति साम्प्रतम् । शब्दे हि । 'त्रयो धर्मस्कन्धा' (छा. २-२३-१) इति प्रस्तुत्य 'ब्रह्मसंस्थोऽमृतत्वमेती'त्यस्मिञ्छब्दे हि यत्याश्रमस्य श्रुतत्वात् प्रामाणिकोऽयं यत्याश्रमः । तदेवं ब्रह्मविद्याया न कर्माङ्गत्वम्, अपि तु स्वतन्त्रपुरुषार्थहेतुत्वमिति सिद्धम् ॥ १७ ॥

* २ परामर्शाधिकरणम् *

पूर्वं 'त्रयो धर्मस्कन्धा' इत्यादिश्रुतिर्यत्याश्रमसद्भावे प्रमाणमित्यभाणि । तदसम्भवीत्याक्षेपसङ्गत्येदमाह—

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

अत्र पूर्वपक्षे पारिव्राज्याभावाद् ज्ञानस्य स्वतन्त्रफलत्वासिद्धिः, सिद्धान्ते तत्सद्भावात् तत्सिद्धिरिति फलभेदः । अत्र यत्याश्रमो विषयः । स किमस्ति न वेति विशये जैमिनिराचार्य आह — नास्ति यत्याश्रमः विध्यभावात् । 'त्रय'

१. 'म्भवमित्या' खपुस्तके पाठः.

इत्यादिश्रुतौ तु परामर्शम् (१) अनुवादमात्रमवगम्यते, न विधिः । अत इयं श्रुतिरचोदना लिङादिशून्या, चकाराद् ब्रह्मसस्थास्तुतिपरा च । एवं चान्यपरया श्रुत्या न यत्याश्रमसिद्धिः । किञ्च 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्याद्या श्रुतिरग्न्युद्वासप्रधानं यत्याश्रममपवदति हि यस्मात्, तस्मान्नास्ति यत्याश्रम इति पूर्वः पक्षः ॥ १८ ॥

सिद्धान्तस्तु—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

पारिव्राज्यमनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः, साम्यश्रुतेः । 'त्रयो धर्मस्कन्धा' (छा. २-२३-१) इत्यादिश्रुतावितराश्रमाणां श्रुत्यन्तरविहितानामेतद्वाक्यानुवाद्यगार्हस्थ्येन साम्यश्रवणादित्यर्थः । ततश्चाश्रमचतुष्टयानुवादेन ब्रह्मसंस्थास्तुतिपरादपि वाक्यात् प्रतीयमानाश्रमाः सिध्यन्ति । नच 'वीरहे'त्यादिश्रुतिविरोधः, तस्याः श्रुतेरज्ञानादग्न्युद्वासनोद्युक्ताहिताग्निविषयत्वादिति फलितार्थः ॥ १९ ॥

यद्वा—

## विधिर्वा धारणवत् ॥ २० ॥

अस्मिन् वाक्य आश्रमाणां विधिरेव, नानुवादः । नचानेकाश्रमविधाने वाक्यभेदः स्यादिति साम्प्रतम्, अपूर्वत्वेनाश्रमाणां विधेरावश्यकत्वेन वाक्यभेदस्येष्टत्वात् । एकवाक्यताप्रतीतावप्यपूर्वार्थविधौ दृष्टान्तो धारणवद्, 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र स्रुग्दण्डादधस्तात् समिद्धारणविध्येकवाक्यताप्रतीतावप्युपरिधारणस्यापूर्वत्वादेकवाक्यताभङ्गेन विधिर्यथा कल्पितस्तथेहापीत्यर्थः । वस्तुतस्त्वस्मिन् वाक्ये पारिव्राज्यमेव विधीयते, आश्रमत्रयमनूद्यानित्यफलत्वेन तन्निन्दया ब्रह्मसंस्थत्वस्यैव नित्यफलत्वेन स्तूयमानत्वाद्, यत् स्तूयते तद्विधेयमिति न्यायात् । न च ब्रह्मसंस्थत्वस्य गृहस्थादीनां सम्भवाद् इति साम्प्रतं, तेषां स्वकर्मासक्ततया ब्रह्मसंस्थत्वायोगात् । परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इत्यस्मिन् पक्षे न वाक्यभेदः । तस्मात् सर्वकर्मपरित्यागलक्षणस्य पारिव्राज्यस्य प्रामाणिकत्वाद्विद्यायाः स्वतन्त्रपुरुषार्थसाधनत्वं सिद्धम् ॥ २० ॥

* ३ स्तुतिमात्राधिकरणम् *

पूर्वं यथानुष्ठेयाश्रमसाम्यश्रुतेः पारिव्राज्यस्यानुष्ठेयत्वं प्रतिष्ठापितं, तद्वद्

१. 'परामर्श.' इति स्यात्. २. 'स्थाश्रुति' कपुस्तके पाठः.

'इयमेव जुहूरादित्य' इत्यादिकर्माङ्गस्तुत्या रसतमत्वादिवाक्यस्य साम्यात् स्तुतिमात्रत्वमिति दृष्टान्तसङ्गत्येदमाह—

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

अत्र पूर्वपक्षे कर्माङ्गोपास्तीनामनुष्ठानासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। उद्गीथाद्युपास्तिषु श्रूयते 'स एष रसानां रसतमः परमः' (छा- १-१-३) इत्यादि। तद्वाक्यं किं कर्माङ्गोद्गीथस्तुतिमात्रमुतोद्गीथोपास्तौ गुणविधायकमिति विशये रसतमत्वादिवाक्यं सर्वमपि कर्माङ्गोद्गीथस्तुतिमात्रं, कुतः, कर्माङ्गोद्गीथाद्युपादानश्रवणादिति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु न स्तुतिमात्रम्, अपि तु गुणविधायकम्। कुतः, अपूर्वत्वात्, कर्माङ्गोद्गीथाद्युपास्तीनां रसतमत्वादिगुणानां च मानान्तराप्राप्तत्वादित्यर्थः। प्रकृत एव विधिसम्भवे प्रकरणान्तरगतोद्गीथादिस्तुतिलक्षणाकल्पनमन्याय्यतरमिति भावः॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

किञ्च 'उद्गीथमुपासीत' (छा. १-१-१) 'सामोपासीत' (छा. २-२-१) इत्यादिविधिशब्दाद् गुणविधायकमिदं वाक्यमित्यर्थः॥ २२ ॥

* ४ पारिप्लवाधिकरणम *

पूर्वं यथा रसतमत्वादेरुद्गीथादिस्तुत्यर्थत्वापेक्षयोपास्यविषयसमर्पकत्वस्य ज्यायस्त्वं तथाख्यायिकानामपि विद्यास्तुत्यर्थत्वापेक्षया पारिप्लवशेषत्वस्य ज्यायस्त्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## पारिप्लवार्था इति चेन्न विशेषितत्वात्॥ २३ ॥

अत्र पूर्वपक्षे औपनिषदाख्यायिकानां पारिप्लवप्रयोगशेषत्वात् तदेकवाक्यतोपपन्नशब्दबोध्यविद्यायाः प्राधान्याभावेन पुरुषार्थहेतुत्वासिद्धिः, सिद्धान्ते तासां विद्यास्तुत्यर्थत्वाद्विद्यैकवाक्यतया तस्याः प्राधान्येन पुरुषार्थहेतुत्वसिद्धिरिति फलभेदः। तत्र तत्र 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' (बृ. ४-५-१) इत्याद्याख्यायिकाः श्रूयन्ते। ताः किं पारिप्लवार्था उत सन्निहितविद्यास्तुत्यर्था इति संशये पारिप्लवार्थाः, अश्वमेधे पुत्रादिपरिवृताय राज्ञे यन्नानाविधकथाकथनं तत्

---

१. 'र्माङ्गाश्रितोपा' खपुस्तके पाठः. २. 'दः वेदान्तेषु त' खपुस्तके पाठः.

३. 'त्याद्या आ' खपुस्तके पाठः.

पारिप्लवशब्देनोच्यते, तदर्था एवाख्यायिका इति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु न पारिप्लवार्थाः । कुतः, विशेषितत्वात् । 'पारिप्लवमाचक्षीते'त्युपक्रम्य 'मनुर्वैवस्वतो राजे'त्यादिवाक्यशेषे कासाञ्चिदेवाख्यायिकानां पारिप्लवशेषत्वेन विशेषितत्वादित्यर्थः ॥ २३ ॥

ननु तर्हि किमर्था इमा आख्यायिका इत्याशङ्क्य सन्निधिबलाद्विद्यार्था इत्याह—

**तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥**

तथा चोक्तयुक्त्या पारिप्लवार्थत्वाभावे सति सन्निधिबलाद्विद्यास्तुत्यर्थत्वमाख्यायिकानां युक्तम् । कुतः, एकवाक्यतोपबन्धात् । सन्निहिततत्तद्विद्यैकवाक्यत्वदर्शनादित्यर्थः ॥ २४ ॥

* ५ अग्नीन्धनाधिकरणम् *

पूर्वं यद्वदाख्यायिकानां विद्याशेषत्वेनापेक्षा, तद्वद्यज्ञादिकर्मणामपि फले विद्याशेषत्वेनापेक्षास्त्विति दृष्टान्तसङ्गत्येदमाह—

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥**

पुरुषार्थाधिकरणफलरूपत्वादस्य तत्रोक्तं फलं द्रष्टव्यम् । ब्रह्मविद्या किं स्वफले मोक्षे जनयितव्ये सहकारित्वेन यज्ञादिकर्माण्यपेक्षते न वेति सन्देहे अपेक्षत इति पूर्वः पक्षः । सिद्धान्तस्तु अत एवाद्याधिकरणोक्तात् स्वतन्त्रपुरुषार्थत्वादेव ब्रह्मविद्याया अग्नीन्धनाद्यनपेक्षा । अग्नीन्धनशब्देन स्वस्वाश्रमविहितानि कर्माणि लक्ष्यन्ते । तथा च मोक्षे न कर्मापेक्षा रजतभ्रमनिवृत्तौ शुक्तिज्ञानस्येवेत्यर्थः ॥ २५ ॥

* ६ सर्वापेक्षाधिकरणम् *

यथा पूर्वं ब्रह्मविद्यायाः प्रमात्वाच्छुक्तिज्ञानस्येव स्वफले कर्मानपेक्षत्वमभाणि, तथा स्वोत्पत्तावपि कर्मानपेक्षा प्रमात्वादेवेति दृष्टान्तसङ्गत्येदमाह—

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

अत्र पूर्वपक्षे ज्ञानार्थं यज्ञाद्यनुष्ठानाभावः, सिद्धान्ते तदनुष्ठानावश्यम्भाव

---

१. 'वशेषेण वि' कपुस्तके पाठः. २. 'यजना' कपुस्तके पाठ. ३. 'ति वाक्यार्थं' कपुस्तके पाठः. ४. 'कर्मानपेक्षेत्यभा' खपुस्तके पाठः. ५. 'थैवोत्प' कपुस्तके पाठः.

इति फलभेदः। अत्र किं विद्यायाः स्वोत्पत्तौ कर्मापेक्षास्ति न वेति सन्देहे नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु विद्यायाः स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षास्ति। कुतः, यज्ञादिश्रुतेः। 'विविदिषन्ति यज्ञेन' (बृ. ४-४-२२) इत्यादिना यज्ञादिकर्मणां विविदिषाद्वारा ज्ञानसाधनत्वश्रवणात्। ननु परम्परया ज्ञानोत्पत्तौ कर्मापेक्षावन्मोक्षेऽप्यस्त्वपेक्षा। तत्राह — अश्ववद्, यथाश्वो योग्यताबलाद्रथचर्यायां विनियुज्यते न लाङ्गलाकर्षणे तद्वत् कर्मणां मोक्षे योग्यत्वाभावान्नापेक्षेत्यर्थः ॥ २६ ॥

ज्ञानोत्पत्तौ बहिरङ्गमभिधायान्तरङ्गमभिधातुमाह—

## शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

यद्यप्यत्र विविदिषन्तीति वर्तमानापदेशान्न विधिः, तथापि शमदमाद्युपेतस्तु ब्रह्मज्ञानार्थी स्यात्। कुतः, तदङ्गतया विद्याङ्गतया तद्विधेः। 'तस्मादेवंविच्छान्तो दान्त उपरत' (बृ. ४-४-२३) इत्यादिना तेषां शमदमादीनां विधानात्, तेषां विहितानां चावश्यानुष्ठेयत्वादित्यर्थः ॥ २७ ॥

* ७ सर्वान्नानुमत्यधिकरणम् *

पूर्वं यथा विद्यासन्निधानाच्छमादिकं विद्याङ्गं विधीयत इत्यभिहितं, तथा सर्वान्नानुमतिर्विद्याङ्गमेव विधीयत इति दृष्टान्तसङ्गत्येदमाह —

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

अत्र पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। बृहदारण्यके (६-१-१४) प्राणविद्यायां श्रूयते 'न ह वा अस्यानन्नं जग्धं भवति' इति। तत्र प्राणोपासकस्य किमिदं सर्वान्नानुज्ञानं विद्याङ्गं विधीयते उत स्तुत्यर्थं सङ्कीर्त्यत इति संशये विद्याङ्गं विधीयत इति पूर्वः पक्षः। सिद्धान्तस्तु प्राणात्यये सर्वमन्नं सुरावर्जं यत् तस्य विद्वांसमविद्वासं वा प्रत्यदनीयत्वेनानुमतिरनुज्ञानं, न स्वस्थ प्रति। कुतः, तद्दर्शनात्। चाक्रायणोपाख्याने उषस्तेश्चाक्रायणस्यापत्काल एव हि तस्य हस्तिपकोच्छिष्टकुल्माषभक्षणस्य दर्शनादित्यर्थः। एवञ्च विध्यभावाच्छ्रुत्यादिपर्यन्तस्यान्नस्यैकेनात्तुमशक्यत्वाच्च न सर्वान्नानुज्ञानं विद्याङ्गं

१. 'सर्वानुज्ञा' कपुस्तके पाठः. २. 'च्छ्वादिमर्यादान्न' खपुस्तके पाठः.

विधीयते, अपि तु प्राणमात्रस्यान्नमिदं सर्वमिति यच्चिन्तनं विहितं तत्स्तुत्यर्थं सङ्कीर्त्यत इति ॥ २८ ॥

## अबाधाच्च ॥ २९ ॥

भक्ष्याभक्ष्यविवेकशास्त्रस्याबाधाच्चार्थवादमात्रमित्यर्थः । अन्यथा सामान्यशास्त्रं विशेषपरतया नीयमानं बाधितं स्यादिति भावः ॥ २९ ॥

## अपि च स्मर्यते ॥ ३० ॥

अपि चापत्काले विदुषोऽविदुषश्च सर्वान्नभक्षण स्मर्यते — 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति, 'मद्यं नित्यं ब्राह्मणो वर्जयेदि'ति च ॥ ३० ॥

स्मृतिमूलभूतां श्रुतिमप्याह—

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

अस्याभक्ष्यभक्षणस्य प्रतिषेधकः 'तस्माद् ब्राह्मणः सुरां न पिबेद्' इत्येवंरूपशब्दश्चाकामकारे स्वेच्छाकृतप्रवृत्तिनिरासे श्रूयते । अतः प्राणविदः सर्वान्नानुज्ञानमर्थवादमात्रमिति सिद्धम् ॥ ३१ ॥

* ८ आश्रमकर्माधिकरणम् *

पूर्वं यथा सर्वान्नानुमतेः शास्त्रान्तरविरोधात् स्तुतित्वमुक्तं, तथा 'यावज्जीवमि'त्यादिकर्मनित्यत्वशास्त्रविरोधाद्यज्ञादीनां ज्ञानसाधनत्वश्रुतेः स्तुतित्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

अत्र पूर्वपक्षे विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः, सिद्धान्ते खादिरवत् कर्मणामुभयार्थत्वसम्भवात् तत्सिद्धिरिति फलभेदः । 'सर्वापेक्षा' (ब्र. सू. ३-४-२६) इत्यत्र स्वस्वाश्रमनित्यकर्मणां तत्त्वज्ञानसाधनत्वमुक्तम् । तानि नित्यकर्माणि अमुमुक्षुणा कर्तव्यानि न वेति सन्देहे न कर्तव्यानीति पूर्वः पक्षः । सिद्धान्तस्तु अमुमुक्षुणाप्याश्रमकर्मावश्यं कर्तव्यमेव 'यावज्जीवमि'त्यादिना विहितत्वादित्यर्थः ॥ ३२ ॥

नन्वेवं सति कर्मणां विद्यार्थत्वं न स्यादित्यत आह—

---

१. 'र्थस' कपुस्तके पाठः,

## सहकारित्वेन च ॥ ३३ ॥

सह मिलित्वा चित्तशुद्धिद्वारा विद्यां कुर्वन्तीति सहकारीणि कर्माणि, तेषां भावस्तत्त्वम्, तेन विद्यार्थत्वेन नित्यकर्माणि कर्तव्यानि, यज्ञादिश्रुत्या तदर्थत्वेन तेषां विहितत्वादेवेत्यर्थः ॥ ३३ ॥

ननु कर्मकाण्डस्थनित्याग्निहोत्रेभ्यो भिन्ना एव यज्ञादयो विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते, प्रकरणभेदस्य भेदकत्वात्। कथं तेषामुभयार्थत्वमित्यत आह—

## सर्वथापि त एवोभयलिङ्गात्॥ ३४ ॥

सर्वथापि नित्यत्वेन विद्यार्थत्वेन चानुष्ठेया यज्ञादयस्त एव, न भिन्नाः। कुतः, उभयलिङ्गात्। 'यज्ञेन विविदिषन्ती'ति श्रुतिलिङ्गाद्, 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' (गी. ६-१) इति स्मृतिलिङ्गाच्चेत्यर्थः ॥ ३४ ॥

किञ्च—

## अनभिभवं च दर्शयति ॥ ३५ ॥

ब्रह्मचर्यादिसाधनसम्पन्नस्य रागादिक्लेशैरनभिभवम् 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' (छा. ८-५-३) इत्याद्या श्रुतिर्दर्शयति। अनेन सूत्रेण ब्रह्मचर्याद्याश्रमकर्मणां सहकारित्वमेव दृढीकृतम् ॥ ३५ ॥

* ९ तद्दृष्ट्यधिकरणम् *

पूर्वं यथा यज्ञादिश्रुत्याश्रमकर्मणामेव ज्ञानसाधनत्वविधानादाश्रमिणामधिकारो, न तथा विधुराणामधिकारः तत्कृतकर्मणां ज्ञानसाधनत्वाभावादिति प्रत्युदाहरणसङ्गत्येदमाह—

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

अत्र पूर्वपक्षे अनाश्रमिकर्मणां जपादीनां विद्यासाधनत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र विधुराणां किं ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु अन्तरा आश्रममन्तरा विना वर्तमानानामप्यस्त्यधिकारः। कुतः, तद्दृष्टेः। तस्य ब्रह्मविद्याधिकारस्यानाश्रमिणां रैक्व-

---

१. 'तत्कर्म' खपुस्तके पाठः, २ 'श्रमान्तरं वि' खपुस्तके पाठः,

दीनां श्रुतौ स्मृतौ च दर्शनादित्यर्थः ॥ ३६ ॥

अपि च स्मर्यते ॥ ३७ ॥

संवर्तप्रभृतीनामनाश्रमिणामपि योगित्वं स्मर्यत इत्यर्थः ॥ ३७ ॥

**नन्वना**श्रमिणां विद्याहेतुकर्माभावान्न तत्राधिकार इत्यत आह—

विशेषानुग्रहश्च ॥ ३८ ॥

अनाश्रमिणामपि रैकादीनां जपोपवासदेवताराधनादिभिः कर्मविशेषैर्ज्ञानहेतुभिरस्ति विद्यायामनुग्रह इत्यर्थः ॥ ३८ ॥

**नन्वना**श्रमिणामपि जपादिनैव यदि विद्या सिद्ध्येत्, तर्हि आश्रमित्वं व्यर्थं स्याद् । अत आह—

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अतस्त्वनाश्रमित्वादितरदाश्रमित्वं ज्यायः शीघ्रमेव विद्यासाधनम् । कुतः[1], 'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' (बृ. ४-४-९) इति श्रुतौ पुण्यकृत्त्वविशेषणरूपश्रुतिलिङ्गाच्चेत्यर्थः ॥ ३९ ॥

* १० तद्भूताधिकरणम् *

**पूर्वं** यथा अनाश्रमिणां कर्मणो विद्याहेतुत्वमुक्तं तथोत्तमाश्रमात् पूर्वाश्रमं प्राप्तस्य कर्मणां विद्याहेतुत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

अत्र पूर्वपक्षे आश्रमज्यायस्त्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । उत्तमाश्रमात् पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुर्न वेति सन्देहे विद्याहेतुरिति पूर्वः पक्षः । सिद्धान्तस्तु तद्भूतस्य प्राप्तोत्तमाश्रमस्यातद्भाव उत्तमाश्रमात् प्रच्युतिः कथमपि न सम्भवतीति जैमिनेरप्याचार्यस्य सम्मतम् । अपिशब्देन भगवतो बादरायणस्य सम्मतमेवेति दर्शितम् । कुतः, नियमातद्रूपाभावेभ्यः 'अरण्यमियादिति पदं ततो न पुनरेयादि'ति नियमः, प्रत्यवरोहबोधकश्रुत्यभावोऽतद्रूपम्, शिष्टाचाराभावोऽभावः, तेभ्यः । तस्मात् प्रच्युतेरप्रामाणिकत्वान्न प्रच्युतस्य कर्म विद्याहेतुरिति सिद्धम् ॥ ४० ॥

---

१. 'कुतः' इत्येतदुत्तर 'लिङ्गाच्च' इति पठनीय भाति.

* ११ आधिकारिकाधिकरणम् *

**यथा** पूर्वं प्रच्युतस्य कर्म न विद्याहेतुरित्युक्तं, तथा प्रच्युतस्यापि कृतप्रायश्चित्तस्य कर्म न विद्याहेतुरिति दृष्टान्तसङ्गत्येदमाह—

## न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४१ ॥

अत्र पूर्वपक्षे कृतप्रायश्चित्तस्य कर्म न ज्ञानहेतुः, सिद्धान्ते तद्धेतुरिति फलभेदः । प्रमादात् प्रच्युतस्य किं प्रायश्चित्तमस्ति न वेति सन्देहे आधिकारिकमप्यधिकारलक्षणसिद्धं गर्दभालम्भनरूपप्रायश्चित्तमाधिकारिकम्, तदपि नैष्ठिकस्यावकीर्णिनो नैवास्ति । कुतः, पतनानुमानात् ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' ॥

इत्यनिवर्त्यपातित्यश्रुत्यनुमापकस्मरणात् तस्य प्रायश्चित्तस्यायोगादिति पूर्वः पक्षः ॥ ॥ ४१ ॥

**सिद्धान्तस्तु**—

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

नेदं महापातकं, येन प्रायश्चित्तं न स्याद्, अपि त्वेके आचार्या उपपदपूर्वमेवेदं पातकं मन्यन्ते । अत उपकुर्वाणस्येव नैष्ठिकस्याप्युक्तप्रायश्चित्तसद्भावमिच्छन्ति, उभयोर्ब्रह्मचारित्वे सत्यवकीर्णित्वाविशेषाद्, अशनवद्, यथा ब्रह्मचारिणो मधुमांसाशिनो व्रतलोपः पुनः संस्कारश्च तद्वत् । तस्मात् प्रायश्चित्तसद्भावो युक्ततरः । तदुक्तं प्रमाणलक्षणे 'समा विप्रतिपत्तिः स्यात्' (जै. १-३-८) 'शास्त्रस्था वा तन्निमित्तत्वाद्' (१-३-९) इति । प्रायश्चित्ताभावस्मरणं तु यत्नगौरवार्थमिति व्याख्यातव्यम् । इत्थं वानप्रस्थस्य महाकक्षाभिवर्धनं प्रायश्चित्तम् । यतेस्तु स्वशास्त्रसंस्कार इति बोध्यम् ॥ ४२ ॥

* १२ बहिरधिकरणम् *

**पूर्वं** यथा प्रच्युतस्य प्रायश्चित्तेनैव शुद्धत्वात् तत्कृतं कर्म विद्यासाधनमित्यवादि, तथा कृतप्रायश्चित्तेन सह शिष्टाचाररूपं कर्म विद्यासाधनं भवत्विति दृष्टान्तसङ्गत्येदमाह—

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

अत्र पूर्वपक्षे 'आरूढपतितमि'त्यादिस्मृतिविरोधः, सिद्धान्ते तदानुगुण्यमिति फलभेदः । कृतप्रायश्चित्तेन सह कृतश्रवणादिकं विद्यासाधनं न वेति सन्देहे विद्यासाधनमिति पूर्वः पक्षः । सिद्धान्तस्तु ऊर्ध्वरेतसामाश्रमात् प्रच्युतिर्महापातकमुपपातकं वास्तु । उभयथापि ते कृतप्रायश्चित्ता अपि शिष्टैर्बहिष्कार्याः, 'प्रायश्चित्तं न पश्यामि', 'आरूढपतितं विप्रं दृष्ट्वा चान्द्रायणं चरेदि'ति निन्दास्मृतेः शिष्टाचाराच्च । अतः प्रायश्चित्तेन परलोकशुद्धेनापि तेन सह कृतश्रवणादिकं न विद्यासाधनमिति सिद्धम् ॥ ४३ ॥

* १३ स्वाम्यधिकरणम् *

**पूर्वं** यथा यः कृतप्रायश्चित्तः स संव्यवहार्य इत्युत्सर्गस्य निन्दातिशयस्मृत्या नैष्ठिकादिषु बाध इत्यभाणि, तथा यो यदङ्गकर्ता स तदाश्रितस्य कर्तेत्युत्सर्गस्य कर्तुः फलश्रुत्या बाधो भवत्विति दृष्टान्तसङ्गत्येदमाह—

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अत्र पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यम्, सिद्धान्त ऋत्विजः कर्तृत्वं स्वाम्यधीनमिति परम्परयैकाधिकरण्यमिति फलभेदः । तत्र किमङ्गाश्रितोपासनानि यजमानकर्तृकाणि आहोस्विदृत्विक्कर्तृकाणीति सन्देहे स्वामिनो यजमानस्यैवाङ्गाश्रितोपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते । कुतः, फलश्रुतेः कर्माङ्गे पञ्चविधसाम्नि वृष्ट्युपासकस्य 'वर्षति हास्मै' (छा. २-३ २) इत्यादिफलश्रवणात् । अतो यजमानकर्तृकाण्येवेति पूर्वः पक्षः ॥ ४४ ॥

**सिद्धान्तस्तु—**

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

अङ्गोपासनमार्त्विज्यमृत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते । तस्मै हि साङ्गाय कर्मणे ऋत्विक् परिक्रीयते यजमानेन । तथा च यजमानगामिफलकमप्यङ्गोपासनं यजमानेन स्वगामिफलकर्मार्थं परिक्रीतर्त्विक्कर्तृकमेव कर्माङ्गप्रणयनाश्रितगोदोहनवदिति न फलश्रुतिविरोधः ॥ ४५ ॥

---

१. 'ढ प' ख, पाठ    २. 'ढ प' ख. पाठः

किञ्च—

## श्रुतेश्च ॥ ४६ ॥

'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैवैतामाशिषमाशासत इति होवाच' इति श्रुतेः ऋत्विक्कर्तृकस्योपासनस्य यजमानगामिफलत्वमवगम्यत इत्युपासनानि ऋत्विक्कर्तृकाणीति सिद्धम् ॥ ४६ ॥

* १४ सहकार्यन्तरविध्यधिकरणम् *

पूर्वं यथा 'यां काञ्चन यज्ञ' इत्यादिवाक्यशेषादुद्गीथाद्युपासनस्यार्त्विज्यनिर्णयः, तद्वद् 'अथ ब्राह्मण' (बृ. ३-५-१) इत्यादिविधिविधुरवाक्यशेषान्मौनस्याविधेयत्वनिश्चय इति दृष्टान्तसङ्गत्येदमाह—

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

अत्र पूर्वपक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते ज्ञानं प्रत्यन्तरङ्गस्य तस्य तत्सिद्धिरिति फलभेदः । बृहदारण्यके श्रूयते– 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' (३-५ १) इति । तत्र किं मौनं विधीयते न वेति सन्देहे नेति पूर्वः पक्षः, सिद्धान्तस्तु फलभूतसाक्षात्कारे श्रवणाद्यपेक्षया सहकार्यन्तरस्य मौनस्य निदिध्यासनाख्यस्य विधिराश्रयितव्यः, अपूर्वत्वात् । ननु 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमि'त्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगदर्शनात् कथमत्र मौनं निदिध्यासनं स्यादत आह—तृतीयं श्रवणाद्यपेक्षया निदिध्यासनमेवात्र मौनम् विधेयम् । स्मृतावितराश्रमसमभिव्याहारान्निदिध्यासनप्रधानं पारिव्राज्यं मौनशब्देन लक्ष्यत इत्यविरोधः । ननु कस्य मौनविधिरित्यत आह– तद्वतः विद्यावतः, 'विदित्वे'ति परोक्षज्ञानवतः संन्यासिनः प्रकृतत्वात् । ननु सूक्ष्मवस्तुसाक्षात्कारे निदिध्यासनस्य प्राप्तत्वाद्विधिर्निरर्थक इत्यत आह– पक्षेण । यस्मिन् पक्षे भेददर्शनप्राप्तिस्तेन पक्षेण प्राप्त्यभावाद्विधिरर्थवानेव । ननु ब्रह्मपरवाक्ये कथं विधिरित्याशङ्क्य दृष्टान्तमाह– विध्यादिवत् विधेरादिर्विध्यादिः प्रधानविधिः, तद्वद्, यथा दर्शपूर्णमासप्रधानपरे वाक्ये अन्वाधानादेरङ्गजातस्य विधिस्तद्वन्मौनस्येत्यर्थः ॥ ४७ ॥

नन्वेवं श्रवणादिप्रधाने कैवल्याश्रमे श्रुतिसिद्धे कस्माच्छान्दोग्ये 'अभिसमावृत्य कुटुम्बे' (छा. ८-१५-१) इति गृहिणोपसंहारः । तत्राह—

## कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४८ ॥

यज्ञादीनामाश्रमान्तरविहिताना वा शमादीनां गृहस्थाश्रमे कार्त्स्न्येन सम्भवाद् गृहस्थाश्रमेणोपसंहारः, नतु सन्यासाभावादित्यर्थः ॥ ४८ ॥

## मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

मौनस्य गार्हस्थ्यस्य च यथा श्रुतिमत्त्वं तद्वद् ब्रह्मचारिवानप्रस्थाश्रमयोरपि श्रुतिषूपदेशात् ताभ्यां सह चत्वार आश्रमा. प्रसङ्गादुक्ता[१] । द्वयोर्बहुवचन व्यक्तिभेदाभिप्रायम् ॥ ४९ ॥

' १५ अनाविष्कुर्वदधिकरणम् '

पूर्वत्र मौनशब्दस्य ज्ञानातिशये निदिध्यासने प्रसिद्धत्वान्निदिध्यासनं विधेयमित्युक्तम् । तद्वद् बाल्यशब्दस्य कामचारादौ प्रसिद्धेस्तद्विधेयमिति दृष्टान्तसङ्गत्येदमाह—

## अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

अत्र पूर्वपक्षे कामचारादेर्विद्याङ्गत्वेनानुष्ठान, सिद्धान्ते भावशुद्धेरेवेति फलभेदः । पूर्वोदाहृतवाक्ये बाल्यशब्देन किं बालस्य कर्म कामचारादिक विधीयत, उत भावशुद्धिरिति संशये कामचारादिकमिति पूर्वः पक्षः । सिद्धान्तस्तु 'अव्यक्तलिङ्गा अव्यक्ताचारा' (जा. ६) इति श्रुतेः स्वगुणैरनाविष्कुर्वन्नात्मानमप्रख्यापयन् भावशुद्धो भवेदित्येतावन्मात्र विधीयते, तावन्मात्रस्य प्रधाने ज्ञानाभ्यासेऽन्वयाद्, न कामचारादिक, तस्य तत्रानन्वयात्, शौचादिधर्मविधायिशास्त्रबाधाचेति ॥ ५० ॥

* १६ ऐहिकाधिकरणम् *

इत्थं संन्यासादिबाल्यान्तं साधनजातमभिधाय तत्साध्यविद्याजन्म विचार्यत इति हेतुहेतुमद्भावसङ्गत्येदमाह—

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

अत्र पूर्वपक्षे श्रवणादेर्विद्यासाधनत्वासिद्धिः, सिद्धान्ते प्रतिबन्धकवशाद् विलम्बेऽपि तत्सिद्धिरिति फलभेदः । श्रवणादिभिः किमिहैव विद्योत्पत्तिरुत कदाचिदमुत्रापीति संशये, इहैव विद्याजन्मास्त्विति कामनया श्रवणादिषु प्रवृत्तेरैहिकमेव विद्याजन्मेति पूर्वः पक्षः । सिद्धान्तस्तु फलोन्मुखं विद्याविरुद्धफलकं[२] कर्म

---

१. 'च इ' क. पाठः. २. 'लकर्म' क. पाठः.

प्रस्तुतम् । तेन प्रतिबन्धाभावे सत्यैहिक विद्याजन्म श्रवणादिभिर्भवत्येव । सति तु प्रतिबन्धे अमुत्रापीत्यानियम एव, न त्विहैवेति नियमः[1]। कुतः, तद्दर्शनात् 'गर्भ एवैतच्छयानो वामदेव एवमुवाच' (ऐ. ४-५.) इति 'श्रवणायापि बहुभिर्यो न लभ्यः' (क. २-७.) इत्यादिषु श्रुतिषु प्रतिबन्धाप्रतिबन्धाभ्यां तस्यानियमस्य दर्शनादित्यर्थः ॥ ५१ ॥

* १७ मुक्तिफलानियमाधिकरणम् *

पूर्वं यथा विद्याया ऐहिकामुष्मिकत्वविशेषनियम उक्तः, तथा तत्फलेऽपि मोक्षे कश्चिदुत्कर्षादिविशेषनियमः स्यादिति दृष्टान्तसङ्गत्येदमाह—

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

अत्र पूर्वपक्षे कर्मसाध्या मुक्तिः, सिद्धान्ते ज्ञानैकाभिव्यक्ता मुक्तिरिति फलभेदः । मुक्तिरत्र विषयः । तस्यां किं विद्यावद् विशेषनियमोऽस्ति न वेति सन्देहे अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु एव विद्यावन्मुक्तिरूपफलस्यानियमः निर्विशेषत्वमेव । कुतः, तदवस्थावधृतेः मुक्त्यवस्थाया निर्विशेषब्रह्मस्वरूपत्वेन 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिष्ववधारणात् । तस्माद्विद्यासमकालैव मुक्तिः । सा च निरतिशयानन्दब्रह्मस्वरूपैवेति सिद्धम् । पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ ५२ ॥

अस्मिन् पादे सप्तदशाधिकरणानि, सूत्राणि द्विपञ्चाशत् ।
अस्मिन्नध्याये सप्तषष्ट्यधिकरणानि, सूत्राणि षडशीत्युत्तरशतम् ।

यदैक्यमत्यै वैराग्यतत्त्वमर्थोपसंहृतिः ।
शान्त्यादि साधनं सर्वं प्रत्यपादि तदस्म्यहम् ॥

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**
तृतीयाध्यायस्य चतुर्थः पादः ।
समाप्तश्च साधनाध्यायः ।



## अथ चतुर्थोऽध्यायः ।

* १ आवृत्त्यधिकरणम् *

पूर्वत्र साधनं निरूपितम्, इह तत्फलं निरूप्यत इति हेतुहेतुमद्भावस-

1. 'पूर्वं' क. पाठः.

ङ्गत्यायमध्याय आरभ्यते । तत्र पूर्वं मोक्षे विशेषाभाव उक्तः । तथा श्रवणादावावृत्तिविशेषो नास्तीति दृष्टान्तावान्तरसङ्गत्येदमधिकरणमाह—

## आवृत्तिरसकृदुपदेशात् ॥ १ ॥

अत्र पूर्वपक्षे श्रवणादेः प्रयाजादिवददृष्टार्थत्वात् सकृदनुष्ठानं, सिद्धान्ते त्ववघातवद्यावत्फलमावृत्तिरिति फलभेदः । पूर्वं साक्षादेव श्रुत्युक्तं संन्यासादिसाधनं[2] विचिन्तितम् । सम्प्रति फलार्थापत्तिगम्यमावृत्त्यादिकमघाश्लेषाधिकरणात् प्राक् चिन्त्यते । तत्रास्याधिकरणस्य श्रवणादिसाधन विषयः । तत् किं सकृदेव कर्तव्यमुत[3] तस्यावृत्तिः कर्तव्येति विशये सकृदेवेति पूर्वः पक्षः । सिद्धान्तस्तु षड्जादिस्वरसाक्षात्कारवद् दुर्विज्ञेयात्मसाक्षात्कारस्यावृत्तिविशिष्टश्रवणादिसाध्यतया तदावृत्तिरेव कर्तव्या । कुतः, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. ४-५-६.) इत्याद्यसकृदुपदेशात् । एवं 'वेद' 'उपासीते'त्यावृत्तिश्रवणादुपास्यसाक्षात्कारे[4]फलहेतुषूपासनेष्वावृत्तिर्बोध्या ॥ १ ॥

किञ्च

## लिङ्गाच्च ॥ २ ॥

'रश्मींस्त्वं पर्यावर्तयाद्' (छा. १-५-२) इति रश्मिबहुत्वोपासन विदधद्वाक्य प्रत्ययावृत्तिं दर्शयति । अतस्तल्लिङ्गात् तन्न्यायात् साक्षात्कारसाधनेष्वावृत्तिः कर्तव्येत्यर्थः ॥ २ ॥

* २ आत्मत्वोपासनाधिकरणम् *

पूर्वत्र श्रवणादेरावृत्तिरुक्ता । तामुपजीव्य किञ्चिद्विचार्यत इत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

अत्र पूर्वपक्षे श्रुतीनामभेदपराणां गौणार्थत्व, सिद्धान्ते मुख्यार्थत्वमिति फलभेदः । तत्र किं श्रवणाद्यावृत्तिकाले प्रत्यक्त्वेन ब्रह्म ध्यातव्यमुत भिन्नत्वेनेति विशये नाहमीश्वर इति प्रत्यक्षविरोधाद् भिन्नत्वेनेति पूर्वः पक्षः । सिद्धान्तस्तु आत्मेत्येव[5] ब्रह्म ध्यातव्यम् । तथा हि जाबाला आत्मत्वेन ब्रह्माभ्युपगच्छन्ति 'त्वं वा अहमस्मि भगवो देवते अह वै त्वमसि' इति । तथा ग्राहयन्ति च

---

१. 'न्तादवा' क. पाठ.. २. 'न चि' ख. पाठ.. ३. 'मुतावृ' क. पाठ..
४. 'रद्वारा फ' ख. पाठः. ५. 'आत्मत्वेन ब्र' ख. पाठः.

ब्रह्मात्मत्वेन 'तत्त्वमसी'त्यादि याक्यानि । नच तेषां 'मनो ब्रह्म' (छा. ३-१८-१) इत्यादिवद् गौणार्थत्वं, सति मुख्यार्थत्वे गौणार्थत्वायोगात् । नच प्रत्यक्ष-विरोध· । तस्य मिथ्यागोचरत्वेन पारमार्थिकाभेदागोचरत्वादिति भावः ॥ ३ ॥

: ३ प्रतीकाधिकरणम् :

पूर्वं यथा ब्रह्मणा सहाभेदसत्त्वादहङ्ग्रह उक्तः, तद्वत् प्रतीकेष्वपि ब्रह्म-विकारतया जीवाभिन्नब्रह्माभिन्नत्वाज्जीवाभेदसत्त्वेनाहङ्ग्रह· कार्य इति दृष्टान्तस-ङ्गत्येदमाह---

## न प्रतीके न हि सः ॥ ४ ॥

अत्र पूर्वपक्षे प्रतीकोपास्तीनामहङ्ग्रहोपास्तेर्विशेषासिद्धिः, सिद्धान्ते तत्सि-द्धिरिति फलभेदः ।'मनो ब्रह्म' (छा.३-१८-१) इत्यादीनि प्रतीकोपासनानि श्रूयन्ते । तत्र किं मनआदौ प्रतीकेऽहम्ग्रहः कर्तव्यो न वेति सन्देहे कर्तव्य इति पूर्वः पक्षः । सिद्धान्तस्तु प्रतीकेऽहम्ग्रहो न कर्तव्य· । कुतः, विकल्पासहत्वात् । तथा हि । किं प्रतीके आत्मत्वानुभवबलादहंग्रहः, उत श्रुतत्वाद्, उताहो स्वाभिन्नब्रह्माभिन्न-त्वात् । न तावदाद्यः । तथानुभवाभावात् । नहि स उपासकः आत्मत्वेन प्रतीक-मनुभवति । न द्वितीयः, अश्रवणात् । नापि तृतीय., प्रतीकस्य स्वरूपेण ब्रह्माभि-न्नत्वायोगात् । अतः प्रतीकेऽहंग्रहो न कर्तव्य इति सिद्धम् ॥ ४ ॥

* ४ ब्रह्मदृष्ट्यधिकरणम् *

पूर्वोक्तप्रतीकोपासनानि विषयीकृत्यान्यत् किञ्चिद्विचार्यत इत्येकविषयत्व-सङ्गत्येदमाह---

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

अत्र पूर्वपक्षे निकृष्टे उत्कृष्टबुद्धिः कर्तव्येति लौकिकन्यायानपेक्षा, सिद्धान्ते तदपेक्षेति फलभेदः । अत्र कि ब्रह्मणि प्रतीकदृष्टिः कर्तव्या, उत प्रतीके ब्रह्मदृ-ष्टिरिति विशये ब्रह्मणः प्राधान्येनोपास्यत्वसिद्धये तस्मिन् प्रतीकदृष्टिः कर्तव्येति पूर्वः पक्षः । सिद्धान्तस्तु प्रतीक एव ब्रह्मदृष्टिः कर्तव्या । कुत., ब्रह्मण उत्कर्षाद् उत्कृष्टदृष्टौ हि निकृष्टे क्रियमाणायां निकृष्टस्योत्कृष्टता भवति राजदृष्ट्यामात्यस्येव । नचैवं ब्रह्मणः प्राधान्यालाभ, इष्टापत्तेरिति भावः ॥ ५ ॥

* ५. आदित्यादिमत्यधिकरणम् *

सिद्धरूपादित्यादिभ्यः कर्मरूपोद्गीथादीनां फलसान्निकर्षोत्कर्षाद् ब्रह्मवद्धि·

शेषणत्वनियम इति दृष्टान्तसङ्गत्येदमाह—

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

अत्र पूर्वोत्तरपक्षयोस्तत्तत्पक्षसिद्धिरेव फलमिति द्रष्टव्यम् । 'य एवासौ तपति तमुद्गीथमुपासीत' (छा. १-३-१) इत्यादीन्यङ्गाश्रितोपासनानि श्रूयन्ते । तत्र किमादित्यादिषूद्गीथादिदृष्टिः कर्तव्या, उतोद्गीथादिष्वादित्यादिदृष्टिरिति विशये उद्गीथादिदृष्टिरिति पूर्वः पक्षः । सिद्धान्तस्तु उद्गीथादिषु कर्माङ्गेष्वादित्यादिमतय एव कर्तव्याः । कुतः, कर्मसमृद्धिरूपफलोपपत्तेः, यथा प्रोक्षणादीनां व्रीह्यादिषु संस्कृतेषु प्रकृतकर्मणोऽपूर्वमुत्पद्यते तथा कर्माङ्गोद्गीथादिष्वादित्यादिमतिभिः संस्कृतेषु प्रकृतकर्मणः फलाधिक्यलक्षणा समृद्धिरुपपद्यत इत्यर्थः । आदित्यादिषूद्गीथादिदृष्टिपक्षे यथोक्तफलसन्निकर्षासिद्धेरुद्गीथादीनामुत्कर्षासिद्धिरित्यभिसन्धिः ॥६॥

* ६ आसीनाधिकरणम् *

पूर्वं कर्माङ्गाश्रितोपासनानामासननियमानपेक्षाणामनुष्ठानप्रकार उक्तः । तद्वदङ्गानाश्रितोपासनेष्वप्यनियम इति दृष्टान्तसङ्गत्येदमाह—

## आसीनः सम्भवात् ॥ ७ ॥

अत्र पूर्वपक्षे आसनाभ्यासासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र कर्माङ्गानाश्रितान्युपासनानि किं तिष्ठन्नासीनः शयानो वा कुर्यादित्यनियमः, उतासीन एवेति नियम इति विशये अनियम इति पूर्वः पक्षः । सिद्धान्तस्तु आसीन एवोपासनानि कुर्वीत । कुतः, गमनादीनां चित्तविक्षेपकरतया आसीनस्यैवोपासनानां सम्भवादित्यर्थः ॥ ७ ॥

## ध्यानाच्च ॥ ८ ॥

उपासनानां ध्यायत्यर्थध्यानरूपत्वाद् ध्यायतेश्चासीनेषु बकादिष्वेकविषयदृष्टिषु प्रयोगादासीन एवोपासीतेत्यर्थः ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ९ ॥

'ध्यायतीव पृथिवी' (छा. ७-६-१) इत्यत्र पृथिव्या अचलत्वमपेक्ष्य ध्यानोपचारो दृष्टः, तस्मादपि लिङ्गादासीन एवोपासीतेत्यर्थः ॥ ९ ॥

---

१. 'किमासी' क पाठः,

## स्मरन्ति च ॥ १० ॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' (गी. ६-११) इत्यादिना शिष्टा उपासनार्थमासन स्मरन्ति ; अतोऽप्यासीन एवोपासीतेति सिद्धम् ॥ १० ॥

* ७ एकाग्रताधिकरणम् *

पूर्वमङ्गानाश्रितोपासनेष्वासननियम उक्तः । तद्वद् दिगादिनियमोऽस्तु 'प्राचीनप्रवणे वैश्वदेवेन यजेते'त्यादिदिगादिनियमदर्शनादिति दृष्टान्तसङ्गत्येद-माह—

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

अत्र पूर्वपक्षे दिगादिष्वादरः, सिद्धान्ते त्वनादर इति फलभेदः । तेष्वेवो-पासनेषु दिगादिनियमोऽस्ति न वेति विशये अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु प्राच्यादिदिगादिनियमो नास्ति । किन्तु यत्र दिशि देशे काले वा चित्तस्यैकाग्रता एकविषयप्रवाहः, तत्रोपासीत । कुतः, दिगादिविशेषाश्रवणात् । ननु 'समे शुचौ' (श्वे. २-१०) इति देशविशेषः श्रूयत इति चेद्, बाढम् । तदपि श्रवणं चित्तैका-ग्र्यसम्पादकदेश उपासीतेति दर्शयति, वाक्यशेषे मनोऽनुकूलत्वविशेषणात् । 'प्रा-चीनप्रवण' इत्यादिश्रवणं तत्कर्मण्येव नोपासनेष्विति द्रष्टव्यम् ॥ ११ ॥

* ८ आप्रायणाधिकरणम् *

पूर्वं यथा दिगादिनियमाश्रवणात् तदभाव उक्तः, तथा यावज्जीवमुपासना-वृत्त्यश्रवणात् तदभाव इति दृष्टान्तसङ्गत्येदमाह—

## आ प्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

अत्र पूर्वपक्षे कादाचित्कप्रत्ययावृत्तेरदृष्टद्वारोपास्यसाक्षात्कारहेतुत्वं, सि-द्धान्ते निरन्तरप्रत्ययावृत्तेः साक्षादेव तद्धेतुत्वमिति फलभेदः । अत्राहङ्ग्रहोपास-नानि किं कदाचित् कृत्वोपरमेद्, उत यावज्जीवमुपासीतेति विशये कदाचिदिति पूर्वः पक्षः । सिद्धान्तस्तु आ प्रायणादा मरणादुपासीत । हि यतस्तत्रापि मरणका-लेऽपि 'स यावत्क्रतुरयमस्माल्लोकात् प्रैति' इति श्रुत्योपास्यप्रत्ययानुवर्तनं दृष्टम् । न च तददृष्टसाध्यं, दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः । तस्मादा मरणमहङ्ग्रहो-पासन कुर्वीतेति[1] सिद्धम् ॥ १२ ॥

---

१- 'ति दृष्टम्' क पाठ,

* ९ तदधिगमाधिकरणम् *

पूर्वं यथोपासकानां यावज्जीवं कर्तव्यमस्तीत्युक्त, न तथा ब्रह्मात्मविदामिति प्रत्युदाहरणसङ्गत्या कर्मक्षयलक्षणां जीवन्मुक्तिमाह—

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

अत्र पूर्वपक्षे ब्रह्मविदोऽपि सञ्चितपापफलभोगानन्तरं मुक्तिः, सिद्धान्ते विद्योत्पत्त्यनन्तरमेव पापनाशाज्जीवन्मुक्तिरिति फलभेदः । अत्र ब्रह्मविद उत्तर-पूर्वाघाश्लेषविनाशौ भवत उत नेति सन्देहे 'नाभुक्तं क्षीयते कर्म' इति स्मृतेर्नेति पूर्वः पक्षः । सिद्धान्तस्तु तदधिगमे ब्रह्मसाक्षात्कारे सति उत्तरपूर्वाघयोः ज्ञाना-दूर्ध्वं देहेन्द्रियादिवशात् सम्भावित पापमुत्तराघं, ज्ञानात् पूर्वमिह जन्मनि जन्मा-न्तरे वा सञ्चित पाप पूर्वाघ, तयोरश्लेषविनाशौ भवत एव । कुतः, तद्व्यपदेशात् 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पाप कर्म न श्लिष्यते' (छा- ४-१४-३) इति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा. ५-२४-३) इति श्रुतिभ्यां तयोरुत्तरपूर्वाघाश्लेषविनाशयोर्ब्रह्मविदि व्यपदेशात् । एव 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. २-२-८) इत्यादिश्रुत्या निर्गुणब्रह्मविद्यास्वप्युत्तरपूर्वाघाश्लेषविनाशयोर्व्यपदेशादित्यर्थः[1] । स्मृ-तिस्त्वज्ञविषयेति भावः ॥ १३ ॥[2]

* १० इतरासंश्लेषाधिकरणम् *

पूर्वं ब्रह्मविदः पापस्याश्लेषविनाशावुक्तौ, न तथा पुण्यस्यापि तौ भवतः, तस्य श्रौतत्वेन श्रौतब्रह्मज्ञानेनाविरोधादिति प्रत्युदाहरणसङ्गत्येदमाह—

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

फलमत्र पूर्ववत् । पुण्यस्याप्यश्लेषविनाशौ भवत उत नेति सन्देहे नेति पूर्वः पक्षः । सिद्धान्तस्तु अकर्त्रात्मबोधसामर्थ्यादितरस्यापि पुण्यस्योत्तरस्य पूर्वस्य च एवमघवदश्लेषो विनाशश्च भवतः । 'उभे उ हैवैष एते तरति' (बृ. ४-४-२२) इत्यादिश्रुतिभिस्तद्व्यपदेशादित्यर्थः । ब्रह्मविदः पुरुषधौरेयस्य पुण्यपापयो-र्बन्धहेत्वोरभावाद् देहपाते मुक्तिरवश्यं भवत्येवेत्यधिकरणद्वयस्य फलमुक्तं भवति ॥ १४ ॥

---

१. 'शादित्यर्थः' ख. पाठः. २. 'र्थः ॥ १३ ॥' क. पाठः.

* ११ अनारब्धकार्याधिकरणम् *

पूर्वं ज्ञानात् कर्मक्षय उत्सर्गत उक्तः । तस्येह प्रारब्धकर्मव्यतिरिक्तविषयत्वेनापवादः क्रियत इत्युत्सर्गापवादसङ्गत्येदमाह—

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अत्र पूर्वपक्षे जीवन्मुक्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्रानारब्धकर्मवदारब्धे पुण्यपापे ज्ञानान्नश्यत उत नेति सन्देहे 'क्षीयन्ते चास्य कर्माणी'-(मु.२-२-८)त्यविशेषश्रवणान्नश्यत इति पूर्वः पक्षः । सिद्धान्तस्तु आरब्धे पुण्यपापे न नश्यतः प्रवृत्तफलत्वान्मुक्तेषुवत् । अपि त्वनारब्धकार्ये अप्रवृत्तफले पूर्वे अनादिभवपरम्परया ज्ञानोत्पत्तिपर्यन्तं सञ्चिते पुण्यपापे । ते एव ज्ञानान्नश्यतः । कुतः, तदवधेः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छा. ६-१४-२) इति देहपातावधिश्रवणादित्यर्थः । एवञ्च विशेषश्रुत्यनुरोधादविशेषश्रुतिर्नेतव्येति भावः ॥ १५ ॥

* १२ अग्निहोत्राद्यधिकरणम् *

पूर्वमनारब्धकार्याणां कर्मणां ज्ञानात् क्षय उत्सर्गत उक्तः । तस्येह नित्यनैमित्तिकातिरिक्तानारब्धकर्मविषयत्वेनापवादः क्रियत इत्युत्सर्गापवादसङ्गत्येदमाह—

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अत्र पूर्वपक्षे ज्ञानार्थं नित्याद्यनुष्ठानासिद्धिः, सिद्धान्ते तदर्थं तत्सिद्धिरिति फलभेदः । अत्र किं नित्यनैमित्तिककर्मजातं ज्ञानात् क्षीयते न वेति सन्देहे अनारब्धकर्मत्वाविशेषात् क्षीयत इति पूर्वः पक्षः । सिद्धान्तस्तु नित्यनैमित्तकमग्निहोत्रादिकर्मजातं तत्कार्यायैव चित्तशुद्ध्यादिपरम्परया तस्य ज्ञानस्य यत् कार्यं मुक्तिरूपं तस्मा एव । कस्मात्, तद्दर्शनाद् यज्ञादि(बृ. ४-४-२२)श्रुतौ ज्ञानहेतुत्वदर्शनादित्यर्थः । एवञ्च ज्ञानरूपफलैकनाश्यत्वं नित्यनैमित्तिककर्मजातस्य न काम्यवन्नाश इति भावः ॥ १६ ॥

ननु नित्यादेर्ज्ञानार्थत्वे 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति विनियोगवचनं किंविषयमित्यपेक्षायामाह—

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोऽग्निहोत्रादेः कर्मणोऽन्याप्यस्ति काम्यलक्षणा साधुकृत्या पापकृत्या

१. 'म्परायां ज्ञा' ख. पाठः.

चैकेषां शाखिनाम् । तयोर्विनियोग एष उक्तः । काम्यनिषिद्धकर्मणोर्विद्यां प्रत्यनङ्गत्वे सम्प्रतिपत्तिरुभयोर्जैमिनिबादरायणयोरिति ॥ १७ ॥

* १३ यदेवाधिकरणम् *

**पूर्वोक्त**नित्यादिकं विषयमुपजीव्य किञ्चिद्विचार्यत इत्येकविषयत्वसङ्गत्येदमाह—

## यदेव विद्ययेति हि ॥ १८ ॥

अत्र पूर्वपक्षे केवलस्य नित्यादेर्ज्ञानहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । किं नित्यादिकमङ्गाश्रितोपास्तिसहितमेवानुष्ठेयमिति नियमः किं वा तत्साहितं केवलं वेत्यनियम इति सन्देहे नियम इति पूर्वः पक्ष । सिद्धान्तस्तु अनियम एव युक्तः । तथा हि 'यदेव विद्यया करोति' 'तदेव वीर्यवत्तर भवति' (छा. १-१-१०) इति श्रुतिर्विद्यासहितस्य कर्मणो वीर्यवत्तरत्व ब्रुवती विद्याहीनस्य कर्मणो वीर्यवत्त्व दर्शयति । तच्च केवलस्य कर्मणो ज्ञानहेतुत्वे युक्त स्यादित्यर्थ ॥ १८ ॥

* १४ भोगाधिकरणम् *

**पूर्वम**नारब्धकर्मणः क्षयोक्तावारब्धस्य कथं क्षय इत्याकाङ्क्षायामस्योत्थानादुत्थाप्योत्थापकत्वलक्षणसङ्गत्येदमाह—

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

अत्र पूर्वपक्षे विदेहकैवल्यासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । तत्त्वविदत्र विषयः । स किं प्रारब्धक्षयानन्तर संसरति उत नेति सन्देहे देहपातात् पूर्वं संसारानुवृत्तिवद् देहपातानन्तरमपि ब्रह्मवित् संसरतीत्यनारब्धाधिकरणदृष्टान्तेन पूर्वः पक्षः । सिद्धान्तस्तु इतरे त्वारब्धपुण्यपापे भोगेन क्षपयित्वा विद्वान् सम्पद्यते । 'अथ सम्पत्स्ये' (छा. ६-१४-२) 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४-४-६) इति श्रुतिभ्यो देहपातात् पूर्वं प्रारब्धकर्मणः सत्त्वात् कुलालचक्रभ्रमणन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽप्यनुवृत्तिर्युक्ता । तद्भोगानन्तरं कस्यचिदपि कर्मणोऽभावान्न संसारानुवृत्तिः । तस्माद् भोगेन प्रारब्धकर्मनाशानन्तरं विद्वान् स्वरूपानन्दात्मनावस्थानलक्षण कैवल्य लभत इत्यतिशोभनम् ॥ १९ ॥

अस्मिन् पादे चतुर्दशाधिकरणानि, एकोनविंशतिः सूत्राणि ॥

**इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां**

चतुर्थाध्यायस्य प्रथम पाद ।



## अथ द्वितीयः पादः ।

* १ वाक्सम्पत्त्यधिकरणम् *

पूर्वपादे मुक्तिविरुद्धानारब्धकार्यकर्मनिवृत्त्या जीवन्मुक्तत्वम्, आरब्धनिवृत्तौ तु विदेहमुक्तत्वमिति सगुणनिर्गुणविद्ययोः फलं सामान्यतो निरूपितम् । सम्प्रति प्रारब्धकर्मक्षयानन्तरभाविनि मोक्षे विशेषप्रदर्शनाय पादत्रयमारभ्यते । एवञ्च सामान्यनिरूपणस्य विशेषनिरूपणहेतुत्वात् पूर्वेणास्य पादत्रयस्य हेतुहेतुमद्भावसङ्गतिः । तत्रोत्क्रान्त्यपेक्षानपेक्षालक्षणविशेषं निरूपयितुमयं पाद आरभ्यते—

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

पादान्तरत्वादस्याधिकरणस्य नाव्यवहिताधिकरणसङ्गत्यपेक्षा । अत्र पूर्वपक्षे स्वोपादाने स्वस्य लय इति न्यायासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अस्त्युत्क्रान्तिक्रमबोधिका श्रुतिः—'अस्य सोम्य! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा. ६-८-६) इति । तत्र 'वाङ् मनसि सम्पद्यत' इत्यत्र किं सवृत्तिकाया वाच एव मनसि लयः किं वा वाग्वृत्तेरेवेति सन्देहे श्रुतिबलाद् वाच एवेति पूर्वः पक्षः । सिद्धान्तस्तु उक्तिर्वागिति भावव्युत्पत्त्या वाक्छब्देन वाग्वृत्तिरुच्यते । मनोवृत्तौ सत्यामेव मनसि वाग्वृत्तिर्लीयते । कुत., दर्शनाद् मनोवृत्तौ सत्यामेव लोके वाग्वृत्तिलयस्य दर्शनात् । तर्हि वाक्छब्दस्य का गतिरत आह—शब्दाच्च तस्य वाक्छब्दस्य वृत्तिवृत्तिमतोरभेदोपचारेण भावव्युत्पत्त्या वा वृत्तिपरत्वेन नयनादित्यर्थः ॥ १ ॥

उक्तन्यायं चक्षुरादिष्वतिदिशति—

### अत एव च सर्वाण्यनु ॥ २ ॥

अत एवोक्तदर्शनादिहेतो सर्वाणि चक्षुरादीन्द्रियाण्यपि सवृत्तिके मनसि वृत्तिलयमात्रेणानुवर्तन्ते लीयन्ते न स्वरूपेणेत्यर्थः ॥ २ ॥

* २ मनस्सम्पत्त्यधिकरणम् *

पूर्वं मनसि सर्वेन्द्रियलय उक्तः, न तथा मनसः प्राणे वृत्तिलयः, 'अन्नमयं हि सोम्य! मन आपोमयः प्राणः' (छा. ६-५-४) इति श्रुतौ प्राणमनसोर-

---

१. 'पक्षेऽनपेक्षालक्षणविशेषन्या' (?) क. पाठः,

घनविकारत्वश्रवणाद्घनयोश्चोपादानोपादेयभावात् स्वरूपलय इति प्रत्युदाहरणसङ्गत्येदमाह—

## तन्मनः प्राण उत्तरात्॥ ३॥

फलं पूर्ववत्। 'मनः प्राण' इत्युत्तरवाक्ये किं मनसः प्राणे स्वरूपलयो वृत्तिलयो वेति सन्देहे स्वरूपलय इति पूर्वः पक्षः। सिद्धान्तस्तु तत् सर्वेन्द्रियवृत्तिलयाधारं मनोऽपि प्राणे स्ववृत्तिलयेनैव लीयते न स्वरूपेणेति 'मनः प्राण' इत्युत्तराद्वाक्यादवगन्तव्यम्। सुप्तिमृत्यवस्थयोः सवृत्तिके प्राणे सत्येव मनोवृत्तिलयदर्शनादिति हेत्वनुषङ्गः। न ह्यघनयोरुपादानोपादेयत्वमात्रेण तद्विकारयोरप्युपादानोपादेयभावो युक्तः, हिमघटयोस्तददर्शनादिति भावः॥ ३॥

* ३ प्राणसम्पत्त्यधिकरणम् *

पूर्वं प्राणे मनसो वृत्तिलय उक्तः। तद्वत् तेजसि प्राणस्य वृत्तिलयोऽस्तु 'प्राणस्तेजसी'ति श्रुतेरिति दृष्टान्तसङ्गत्येदमाह—

## सोऽध्यक्षे तदुपगमादिभ्यः॥ ४॥

अत्र पूर्वपक्षे तेजश्शब्दस्य मुख्यत्व, सिद्धान्ते भूतोपहितजीवलक्षकत्वमिति फलभेदः। 'प्राणस्तेजसी'त्युत्तरवाक्ये किं प्राणस्य लयस्तेजसि उत जीव इति सन्देहे तेजसीति पूर्वः पक्षः। सिद्धान्तस्तु स प्राणोऽध्यक्षे जीवे निवृत्तवृत्तिस्सन्नवतिष्ठते। कुतः, तं जीवं प्रत्युपगमानुगमनावस्थानेभ्यः 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती'त्युपगमः[2], 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ. ४-४-२) इत्यनुगमनम्, 'स विज्ञानो भवति' इत्यवस्थानम्, तेभ्य इत्यर्थः॥ ४॥

तर्हि 'प्राणस्तेजसी'ति श्रुतेः कोऽर्थस्तत्राह—

## भूतेषु तच्छ्रुतेः॥ ५॥

'प्राणस्तेजसी'ति श्रुतेस्तेजस्सहितेषूत्तरदेहारम्भकेषु पञ्चभूतेषूपहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यर्थः। एवञ्च प्राणस्योपहितजीवप्राप्तावुपाधितेजआदिभूतप्राप्तेः स्वतस्सिद्धत्वादिति भावः॥ ५॥

ननु 'प्राणस्तेजसी'त्येकस्यैव तेजसः श्रवणात् कथ तेजस्सहितेषु भूतेष्वित्युक्तं, तत्राह—

## नैकस्मिन् दर्शयतो हि॥ ६॥

---

१. 'घनयो' क.पाठः. २ 'त्यभ्युप' ख.पाठ..

एकस्मिन्नेव तेजस्युत्क्रान्तिसमये जीवो नावतिष्ठते, उक्तदेहस्य पाञ्चभौतिकत्वेन पञ्चसु भूतेष्ववस्थितेरावश्यकत्वात् । दर्शयतो हि । इममर्थं रंहत्यधिकरणे* व्याख्याते प्रश्ननिरूपणे इत्यर्थः ॥ ६ ॥

* ४ आसृत्युपक्रमाधिकरणम् *

पूर्वोक्तोत्क्रान्तिमुपजीव्यान्यत् किञ्चिद्विचार्यत इत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

अत्र पूर्वपक्षे दहराद्युपासकस्योत्क्रान्त्यभावादिहैव मुक्तिः, सिद्धान्ते तूत्क्रान्तिसम्भवाद् ब्रह्मलोकप्राप्तिरिति फलभेदः । किमुत्क्रान्तिरविदुष एव, उत दहरादिसगुणब्रह्मोपासकस्यापीति सन्देहे 'तयोर्ध्वमायन्नमृतत्वमेति' (छा. ८-६-६) इत्युपासकस्य मोक्षश्रवणादविदुष एवेति पूर्वः पक्षः । सिद्धान्तस्तु आसृत्युपक्रमाद् देवयानमार्गोपक्रमात् प्राग् येयमुत्क्रान्तिः सा विद्वदविदुषोः समाना भवितुमर्हति । कुतः, 'वाङ् मनसी'त्याद्यविशेषश्रवणात् । ननु कथं तर्हि सगुणविद्यायाममृतत्वश्रवणमिति तत्राह — अमृतत्वं चानुपोष्य । अदग्ध्वात्यन्तमविद्याक्लेशजालम् । एतदमृतत्वमापेक्षिकमित्यर्थः ॥ ७ ॥

* ५ तदापीत्यधिकरणम् *

ननूत्क्रान्तिः समानेत्ययुक्तम् अमृतस्य स्वरूपत एवात्यन्तं ब्रह्मसम्पत्तेरित्याक्षेपसङ्गत्येदमाह—

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

अत्र पूर्वपक्षे मृतमात्रस्य मुक्तिः, सिद्धान्ते तदभाव इति फलभेदः । 'तेजः परस्यां देवतायाम्' (छा. ६-८-६) इत्यत्र साध्यक्षं भूतान्तरसहित तेजः परमात्मनि सम्पद्यत इति तेजसो लय इति श्रूयते । स किमात्यन्तिक उत नात्यन्तिक इति सन्देहे परमात्मनः सर्वोपादानत्वात् तत्रात्यन्तिक एव लय इति पूर्वः पक्षः । सिद्धान्तस्तु तद् यथोदीरित तेज आपीतेरामोक्षादवतिष्ठते । कुतः, 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' (क. ५-७) इत्यादिना संसारव्यपदेशात् । अन्यथा पुनः संसाराभावः प्रसज्येत । तस्मात् सुषुप्ताविव नात्यन्तिकलय इति सिद्धम् ॥ ८ ॥

१. 'पूर्वोक्ता' क.पाठ २ 'मानैव भ' ख.पाठ. ३, 'जालम्' ख पाठ.
४. 'व. पुन प्र' ख.पाठ

* रंहत्यधिकरण तृतीयाध्यायप्रथमाधिकरणम्.

ननूक्तलक्षणं तेजो यद्यस्ति, तर्हि पार्श्वस्थैरुपलभ्येतेत्यत आह—

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

यथोक्तं तेजः प्रमाणतश्चकारात् स्वरूपतश्च तृसरेणुवत् सूक्ष्म, तस्य नाडीद्वारा निष्क्रमणश्रुत्या तथा सूक्ष्मत्वस्योपलब्धेरित्यर्थः ॥ ९ ॥

**नोपमर्देनातः ॥ १० ॥**

अतः सूक्ष्मत्वादेव शरीरोपमर्देन स्वयं नोपमृद्यत इत्यर्थः ॥ १० ॥

सूक्ष्मतेजस्सद्भावे औष्ण्यलिङ्गकमनुमानमाह—

**अस्यैव चोपपत्तेरेष ऊष्मा । ११ ।**

स्थूलदेह उपलभ्यमान एष ऊष्मा अस्यैव सूक्ष्मतेजस एव धर्मः । सत्येव तस्मिन् तदुपलब्धेः, तदभावे मृतदेहे तदनुपलब्धेरित्यन्वयव्यतिरेकाभ्यां तद्धर्मस्यैवोपपत्तेरित्यर्थः ॥ ११ ॥

* ६ उत्क्रान्तिप्रतिषेधाधिकरणम् *

आसृत्युपक्रमाधिकरणे मुख्यामृतत्वे उत्क्रान्त्यभावोऽवगतः । स न युक्त इत्याक्षेपसङ्गत्येदमाह—

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥**

नाव्यवहितेनास्य सङ्गतिः । अत्र पूर्वपक्षे निर्गुणब्रह्मविदोऽपि ब्रह्मलोकप्राप्तिः, सिद्धान्ते त्विहैव मुक्तिरिति फलभेदः । निर्गुणब्रह्मविदत्र विषयः । किं तस्योत्क्रान्तिरस्ति न वेति सन्देहे अस्त्युत्क्रान्तिः । ननु नास्त्युत्क्रान्तिः 'न तस्य प्राणा उत्क्रामन्ति' (बृ. ४-४-६) इति निर्गुणब्रह्मविदः शरीरात् प्राणोत्क्रान्तिप्रतिषेधादिति चेत् । न । शारीरात्, जीवादयमुत्क्रान्तिप्रतिषेधो न शरीरात् । 'न तस्मात् प्राणा उत्क्रामन्ति' इति माध्यन्दिनशाखायां जीवादेव प्राणोत्क्रान्तिप्रतिषेधस्य कृतत्वात् । अतः प्राणादिसहितस्य जीवस्य परब्रह्मविदोऽप्यस्तीति पूर्वः पक्षः ॥ १२ ॥

सिद्धान्तस्तु—

**स्पष्टो ह्येकेषाम् । १३ ।**

एकेषां काण्वानां शाखायां प्राणानां परब्रह्मविदो देहादुत्क्रान्तिप्रतिषेधः स्पष्टो हि यत उपलभ्यते, अतो न तस्योत्क्रान्तिः, अपि त्वत्रैव लयः । अन्यथानुत्क्रान्तानां प्राणानां देहेऽवस्थाने 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' (बृ.

३-२-११) इत्युत्क्रान्त्यवधेर्देहस्योच्छूनत्वादि लिङ्गं बाध्येत । तत्सामान्याद् माध्यन्दिनशाखायामपि 'तस्माद्' इत्यनेन देहस्यैव ग्रहणं बोध्यम् । तस्माद् विद्वद्देहादेव प्राणोत्क्रान्तिप्रतिषेध इति ॥ १३ ॥

## स्मर्यते च । १४ ।

महाभारते—'देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः' इति विदुष उत्क्रान्त्यभावः स्मर्यत इत्यर्थः ॥ १४ ॥

* ७ वागादिलयाधिकरणम् *

**ननु** ब्रह्मणि लय इत्ययुक्त 'गताः कलाः पञ्चदश प्रतिष्ठाः' (मु. ३-२-७) इति विद्वद्विषयश्रुत्यैव पृथिव्यादिषु लयश्रवणादित्याक्षेपसङ्गत्येदमाह—

## तानि परे तथा ह्याह । १५ ।

पूर्वाधिकरणाक्षेपरूपत्वादस्य तत्फल द्रष्टव्यम् । अत्र किं ब्रह्मविदः प्राणानां लयः पृथिव्यादिषु उत परब्रह्मणीति विशये पृथिव्यादिष्विति पूर्वः पक्षः । सिद्धान्तस्तु तानि यथोक्तानि प्राणाख्यानीन्द्रियाणि परे ब्रह्मणि लीयन्ते । तथा ह्याह श्रुतिः—'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' (प्र. ६-५) इति । न च पूर्वश्रुतिविरोधः । स्वोपादानेषु पृथिव्यादिषु प्रलीनाः कलाः प्राणाः स्वोपादानैः सह परब्रह्मण्यस्तं गच्छन्तीति श्रुतिद्वयतात्पर्यम् ॥ १५॥

* ८ अविभागाधिकरणम् *

**पूर्वोक्त**विद्वत्कला विषयीकृत्यान्यत् किञ्चिद्विचार्यत इत्येकविषयत्वसङ्गत्येदमाह—

## अविभागो वचनात् ॥ १६ ॥

अत्र पूर्वपक्षे मोक्षासिद्धिः सिद्धान्ते तत्सिद्धिरिति फलभेदः । विद्वत्कलालयः किमविदुष इवानात्यन्तिक उतात्यन्तिक इति सन्देहे अनात्यान्तिक इति पूर्वः पक्षः । सिद्धान्तस्तु विद्वत्कलानां ब्रह्मणा सहात्यन्तमविभाग एव, न सावशेषो लयः । कुतः, कलानां लयोक्त्यनन्तरं '§भिद्येते चासां नामरूपे' इति कलानां शक्त्यात्मकनामरूपयोः पुरुषे लयमुक्त्वा 'स एषोऽकलोऽमृतो भवति' (प्र. ६.५) इति वचनादित्यर्थः । अविदुषस्तु जन्मान्तरसिद्ध्यर्थमनात्यन्तिकलयो युक्तो न विदुषः, तस्य तदभावादिति भावः । स्थितेऽथ परविद्याचिन्ता ॥ १६ ॥

---

१. 'क्षे अपूर्वासि' क.पाठः.

---

§ 'भिद्येते तासाम्' इत्यपि उपनिषत्कोशेषु पाठो दृश्यते.

९ तदोकोऽग्राधिकरणम्

पूर्वमासृत्युपक्रमाधिकरणे सगुणब्रह्मविदां येयमुत्क्रान्तिः सेयमितरोत्क्रान्त्या मार्गोपक्रमपर्यन्तं समेत्युक्तम् । तद्वन्मार्गोपक्रमेऽपि समैवास्तु 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा' (बृ. ४-४-२) इति हृदयप्रद्योतनादेः समत्वश्रवणादिति दृष्टान्तसङ्गत्येदमाह—

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

अत्र पूर्वपक्षे विद्याकृतातिशयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र किमुपासकोऽप्यनुपासकवद्येन केनचिद् द्वारेण निष्क्रामति उत मूर्धन्यनाड्येति सन्देहे येन केनचिदिति पूर्वः पक्षः । सिद्धान्तस्तु तदोकोऽग्रज्वलनं तस्य लीनवृत्तिकवागादिसमुदायस्योत्क्रमिष्यतो जीवस्यौक[1] आधारो हृदयं तस्य यदग्र तस्य ज्वलनं प्रासन्यज्ञानरूपं द्योतनाख्यमादौ भवति । तेन प्रद्योतेन प्रकाशितद्वारो विद्वानविद्वांश्च भवति । तत्राविद्वान् स्थानान्तरेभ्यो निष्क्रामति, विद्वांस्तु मूर्धस्थानादेव । कुतः, विद्यासामर्थ्याद् । यदि विद्वानपीतरवत् स्थानान्तरेभ्यो निष्क्रामेत्, नैवोत्कृष्टं फलं लभेत । ननु स्थानान्तरेभ्योऽप्युत्क्रामन्नुत्कृष्टं फलमाप्नुयादिति चेन्नेत्याह—तच्छेषगत्यनुस्मृतियोगाच्च । तस्याः सगुणविद्यायाः शेषभूता या गतिर्मूर्धन्यनाडीसृतिः तस्या अनुस्मृतिर्ध्यानं तद्योगात् तद्विधानाच्च । यदि स्थानान्तरेभ्यो निष्क्रामतोऽपि विशिष्टफलप्राप्तिः स्यात्, तर्हि विशिष्टगतिचिन्तनविधानं व्यर्थमेव स्यात् । अतो दीर्घकाल नैरन्तर्यसत्कारैर्दृढमासेवितेन हार्देन ब्रह्मणानुगृहीतस्तद्भावमापन्नो विद्वान् मूर्धन्ययैव शतादभ्यधिकया नाड्या निष्क्रामति । तथा च श्रुतिः—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा. ८-६-६) इति ॥ १७ ॥

* १० रश्म्यधिकरणम् *

पूर्वोक्तनाडीसम्बद्धरश्मीनत्रोपजीव्य किञ्चिद्विचार्यत इत्युपजीव्योपजीवकभावसङ्गत्येदमाह—

**रश्म्यनुसारी ॥ १८ ॥**

---

१. 'आयतन इ'ख.पाठः.

अत्र पूर्वपक्षे रात्रौ मृतस्य रश्मिप्राप्त्यर्थं सूर्योदयप्रतीक्षास्ति, सिद्धान्ते नास्तीति फलभेदः । अत्र 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. ८-६-५) इति मूर्धन्यनाड्या निर्गतस्य रश्मिसम्बन्धः श्रूयते । तत्र किं रश्म्यनुसारित्वमहनि मृतस्यैव उत रात्रावपीति सन्देहे अहन्येवेति :पूर्वः पक्षः । सिद्धान्तस्तु अहनि रात्रौ वा मृतो रश्म्यनुसारी भवतीति ॥ १८ ॥

पूर्वपक्षबीजमुपन्यस्य दूषयति—

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च ॥ १९ ॥

अहनि सूर्यरश्मिनाडीसम्बन्धस्य सत्त्वात् तत्रैव मृतो रश्म्यनुसारी भवति, निशि तु न, तदसत्त्वादिति चेद्, न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात् । तच्च दर्शयति श्रुतिः 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता' (छा. ८-६-२) इति । तस्मान्निश्यपि मृतो रश्म्यनुसारीति सिद्धम् ॥ १९ ॥

* ११ दक्षिणायनाधिकरणम् *

उक्तन्यायमन्यत्रातिदिशति—

## अतश्चायनेऽपि दक्षिणे ॥ २० ॥

अस्यातिदेशत्वान्न पृथक् सङ्गत्यपेक्षा । अत्र पूर्वपक्षे दक्षिणायने मृतस्य फलाभावादुत्तरायणमरणार्थं यत्नापेक्षा, सिद्धान्ते हेत्वसिद्धेस्तदनपेक्षेति फलभेदः । किं दक्षिणायने मृतो विद्वान् विद्याफलं प्राप्नोति न वेति सन्देहे उत्तरायणप्राशस्त्यप्रसिद्धेर्भीष्मस्य तत्प्रतीक्षास्मरणाच्च न प्राप्नोतीति पूर्वः पक्षः । सिद्धान्तस्तु अत एव कालान्तरप्रतीक्षानुपपत्तेः विद्याया नित्यवत्फलसम्बन्धश्रवणाच्च दक्षिणेऽप्ययने मृतो विद्वान् फलं प्राप्नोत्येवेत्यर्थः । प्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्य च प्रतीक्षापरिपालनमाचारपरिपालनार्थं पितृप्रसादलब्धस्वेच्छामरणज्ञापनार्थं चेति भावः ॥ २० ॥

ननु

'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ!' ॥ (गी. ८-२३)
'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' (गी. ८-२४)

---

१. 'नार्थं प्रय' ख.पाठः. २. 'स्लोवमर्थः'.क.पाठः. ३. 'र्थं चेति' ख.पाठः.

इति स्मृतिविरोधात् कथं रात्रौ दक्षिणायने वा मृतस्यानावृत्तिः स्यादित्याशङ्क्याह—

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

योगिनः स्मार्तविद्योपासकान् प्रत्ययमहरादिकालविशेषः स्मर्यते स्मार्तत्वप्रत्यासत्तेः, न श्रौतदहराद्युपासकान् प्रति । ननु योगिनो दहराद्युपासका एव स्मृत्युक्ताः किं न स्युरित्यत आह— स्मार्ते चैते ब्रह्मार्पणबुद्ध्यानुष्ठितं कर्म योगः 'अनाश्रितः कर्मफलम्' (गी, ६-१) इत्यादिस्मृतेः । धारणापूर्वकाकर्तृत्वानुभवः साङ्ख्यं 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्' (गी. ५-९) इति स्मृतेः । एवं चैते योगसाङ्ख्ये स्मार्ते एव न श्रौते । तथा च श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः । यदि श्रौतार्थप्रत्यभिज्ञया कालशब्दस्तदभिमानिदेवतापरस्तर्ह्यैकार्थ्यमेवेत्यनवद्यम् । तस्माद् विद्वान् सर्वदैव मृतो विद्याफलमाप्नोतीति अतिशोभनम् ॥

अस्मिन् पाद एकादशाधिकरणानि, सूत्राण्येकविंशतिः ॥

इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां

चतुर्थोऽध्याये द्वितीयः पादः ।

---

## अथ तृतीयः पादः ।

* १ अर्चिराद्यधिकरणम् *

इत्थमुत्क्रान्तिं निरूप्य तत्साध्यं मार्गं निरूपयितुमिमं पादमारभते । पूर्वं यदाकदाचिन्मृतस्यापि फलप्राप्तिरुक्ता । तद्वचेन केनचिन्मार्गेण गतिरिति दृष्टान्तसङ्गत्येदमधिकरणमारभ्यते—

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अत्र पूर्वपक्षे मार्गविकल्पः, सिद्धान्ते मार्गैक्यमिति फलभेदः । अस्ति ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः । तत्र क्वचिद् 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. ८-६-५) इति रश्मिरूपो मार्गः श्रूयते । क्वचित् 'तेऽर्चिषमभिसम्भवन्ति' (बृ. ६-२-१५) इत्यर्चिरादिरूपः । तत्र किं परस्परविभिन्ना एवैते मार्गा

---

१. 'रमते' ख.पाठः. २. 'र्ध्वं आक्र' क.पाठः.

उत नैकविशेषणयुक्त एक एवेति विशये प्रकरणभेदात् परस्परभिन्ना एवेति पूर्वः पक्षः। सिद्धान्तस्तु सर्वो हि ब्रह्मलोकप्रेप्सुरर्चिरादिनैकेन मार्गेण गन्तुमर्हति। कुतः, तत्प्रथितेः। तस्यार्चिरादिमार्गस्य पञ्चाग्निविद्याप्रकरणे 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा. ५-१०-१) इति पञ्चाग्न्युपासकस्येवेतरस्यापि सगुणब्रह्मोपासकस्य प्रथिते· श्रुतत्वादित्यर्थः। न च प्रकरणभेदान्मार्गभेदः सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानाद् गन्तव्यब्रह्मलोकाभेदाच्च। सर्वत्र सर्वविशेषणोपसहारेणानेकविशेषणे एक एव मार्ग इत्यनवद्यम्॥ १॥

* २ वाय्वधिकरणम् *

पूर्वं सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानाद् मार्गैक्यमुक्तम्। तद्वद् अग्न्यनन्तरं वायुपाठप्रत्यभिज्ञानात् तत्रैव वायुर्निवेशयितव्य इति दृष्टान्तसङ्गत्येदमाह—

## वायुमब्दादविशेषविशेषाभ्याम्॥ २॥

अत्र पूर्वपक्षे पाठक्रमस्यानुसरणं, सिद्धान्ते त्वर्थक्रमात् तस्य बाध इति फलभेदः। 'स एत देवयान पन्थानम् *आसाद्याग्निलोकमागच्छति। स वायुलोकं स वरुणलोक स इन्द्रलोकं स प्रजापतिलोक स ब्रह्मलोकम्' (कौ १-३) इति कौषीतकिनो देवयानं मार्गमामनन्ति। छन्दोगाश्चैवमेवाधीयते 'तेऽर्चिषभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षड्डुदङ्ङेति मासांस्तान्। मासेभ्यः संवत्सरं सवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा ५-१०-१, २) इति। तत्र श्रुतिद्वयेऽपि अग्निरादौ पठितः। पश्चात् कौषीतकिश्रुतौ वायुः पठितः। स किं वायुरर्चिरात्मकाग्नेरनन्तरं निवेशयितव्य उत संवत्सरात् परमिति संशये अग्नेरनन्तरमिति पूर्वः पक्षः। सिद्धान्तस्तु अब्दात् संवत्सरादनन्तरमादित्यादर्वाग् वायुमभिसंविशन्ति। कुतः, अविशेषविशेषाभ्याम्। कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यमर्वाक्त्वं वा विशेषो न ज्ञायते तद्वाचकपदाभावात्। बृहदारुण्यके तु 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायु[३]लोकमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' (बृ ५-१०-१) इत्यादित्यादर्वाक्त्वं विशेषो दृश्यते। ताभ्यामविशेषविशेषाभ्यां संवत्सरानन्तरं

१. 'तानेक' ख पाठः. २. 'णयुक्त ए' ख. पाठः. ३. 'लोक' इतिमुद्रितोपनिषत्कोशो न पठ्यते.

* 'आपद्य' इति तु मुद्रितोपनिषत्कोशेषु पठ्यते.

वायुर्निवेशयितव्यः । अग्न्यनन्तरं पाठक्रमस्तूर्ध्वशब्दश्रुतिसिद्धार्थक्रमेण बाध्यते इत्यदोषः । यद्यपि बृहदारण्यके मासानन्तरं देवलोकः श्रूयते, तथापि च्छान्दोग्यश्रुत्या मासानन्तर संवत्सरो निवेशयितव्यः । तस्य मासावयवित्वेन योग्यत्वात् । अत्रैव क्रमो निष्पन्नः—मासेभ्यः संवत्सरं संवत्सराद् देवलोकं देवलोकाद्वायुं वायोरादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतमिति । एवं च सूत्रे वायुपदं देवलोकोपलक्षकमिति द्रष्टव्यम् ॥ २ ॥

* ३ तडिदधिकरणम् *

पूर्वमग्न्यनन्तरं श्रुतस्य वायोः स्थानविशेषश्रवणादर्चिरादिमार्गपर्वत्वेन सम्बन्ध उक्तः । न तथा वरुणादीनां सम्बन्धः सम्भवति स्थानविशेषाश्रवणादिति प्रत्युदाहरणसङ्गत्येदमाह—

**तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥**

अत्र पूर्वपक्षे वरुणादेर्मार्गपर्वत्वेन सम्बन्धासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । किं कौषीतकिवाक्ये श्रुतो वरुणादिर्मार्गपर्वत्वेन सम्बध्यते न वेति सन्देहे नेति पूर्वः पक्षः । सिद्धान्तस्तु तडितो विद्युल्लोकादधि उपरिष्टाद्वरुणः संबध्यते । कुतः, सम्बन्धाद्, वरुणस्याब्दद्वारा विद्युत्सम्बन्धादित्यर्थः । 'आगन्तुकानामन्ते निवेश' इति न्यायाद्विद्युदानन्तर्ये सति यथापाठमिन्द्रप्रजापत्योः क्रमो द्रष्टव्यो बाधकाभावादिति भावः ॥ ३ ॥

* ४ आतिवाहिकाधिकरणम् *

पूर्वं यथा तडिद्वरुणसम्बन्धात् तडिदनन्तरं वरुणस्य सम्बन्ध उक्तः, तद्वदिह लौकिकमार्गचिह्नसारूप्यसम्बन्धादार्चिरादेर्मार्गचिह्नोपदेश इति दृष्टान्तसङ्गत्येदमाह—

**आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥**

अत्र पूर्वपक्षे उपदेशस्य लोकश्रुतेर्वा मुख्यत्वं, सिद्धान्ते न्यायवल्लिङ्गस्य मुख्यत्वमिति फलभेदः । किं तेऽर्चिरादयो मार्गचिह्नभूता उत गन्तॄणां भोगभूमय उताहो आतिवाहिका इति [1]विशये अर्चिरादयो वृक्षनद्यादिवन्मार्गचिह्नभूताः, अथ वा 'अग्निलोकं वायुलोकमि'त्यादिलोकशब्दश्रुतेर्भोगभूमय इति पूर्वः पक्षः । सिद्धान्तस्तु तेऽर्चिरादय आतिवाहिकाः कार्यब्रह्मगन्तॄणां गमयितारः । कुतः, तल्लिङ्गात्

१. 'सन्देहे अ' ख. पाठः.

'अमानवः स एनान् ब्रह्म गमयति' (छा. ४-१५-५) इत्यमानवपुरुषस्य विद्युल्लोकं प्राप्तानुपासकान् प्रति गमयितृत्वश्रवणादित्यर्थः । यत्तूपदेशस्वारस्याच्चिह्नभूता इति, तन्न, तेषामर्चिरादीनामातिवाहिकत्वे विरोधाभावात् । यत्तु लोकशब्दश्रुतेर्भोगभूमय इति, तन्न, निलीनेन्द्रियाणामुपासकानां भोगायोगात् । अतोऽमानवादर्वाचीनार्चिरादिमानवा आतिवाहिका इति भावः ॥ ४ ॥

ननु लिङ्गमात्रं न तेषां नेतृत्वगमकं न्यायाभावादित्यत आह—

## उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥

यद्यर्चिरादयोऽचेतनास्तर्हि मार्गतद्गन्त्रोरुभयोरपि व्यामोहादज्ञत्वादूर्ध्वगतिर्न स्याद् । अतः स्वयं प्रयत्नशून्यश्चेतनान्तरेण नेय इति लौकिकन्यायानुगृहीताल्लिङ्गात् तत्सिद्धेर्नेतृत्वसिद्धेरित्यर्थः ॥ ५ ॥

ननु विद्युल्लोकादमानवस्यैव नेतृत्वश्रवणात् कथं वरुणादीनां नेतृत्वमित्यत आह—

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

अमानवः पुरुषो विद्युल्लोक आगतो वैद्युतः । तेनैव ततो विद्युत्प्राप्तेरूर्ध्वं नीयमाना उपासकाः कार्यब्रह्म प्राप्नुवन्ति, 'अमानव[1] एत्य ब्रह्मलोकान् गमयति' (बृ-६-२-१५) इत्यमानवस्यैव गमयितृत्वश्रवणात् । वरुणादीनां त्वमानवोपसर्जनत्वेन नेतृत्वं न प्राधान्येन । अतोऽर्चिरादयो नेतार इति सिद्धम् ॥ ६ ॥

* ५ कार्याधिकरणम् *

इत्थं गन्तव्यप्राप्तिहेतुं मार्गं निरूप्य फलभूतं गन्तव्यं निरूपयतीति फलफलिभावसङ्गत्येदमाह—

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

अत्र पूर्वपक्षे मार्गस्य मुक्त्यर्थता, सिद्धान्ते भोगार्थतेति फलभेदः । 'स एनान् ब्रह्म गमयति' (छा. ४-१५-५) इत्यत्र किं परं ब्रह्म गन्तव्यमुत कार्यब्रह्मेति संशये परं ब्रह्मेति पूर्वः पक्षः । सिद्धान्तस्तु कार्यमेव ब्रह्म गन्तव्यमिति बादरिराचार्यो मन्यते । कुतः, अस्य कार्यस्य ब्रह्मणः परिच्छिन्नस्य गत्युपपत्तेर्गन्तव्यत्वोपपत्तेरित्यर्थः ॥ ७ ॥

---

१. 'मानस एत्य' इति तु मुद्रितोपनिषत्पाठः. २. 'मै आ' ख.पाठः.

## विशेषितत्वाच्च ॥ ८ ॥

'ब्रह्मलोकान् गमयति' (बृ. ६-२-१९) इति श्रुत्यन्तरे बहुवचनेन गन्तव्यब्रह्मणो विशेषितत्वात् । न परस्येति चकारार्थः ॥ ८ ॥

ननु नपुंसकशब्दस्य परस्मिन्नेव मुख्यत्वात् कथं कार्यब्रह्मणि तद्व्यपदेशः, तत्राह—

## सामीप्यात् तु तद्व्यपदेशः ॥ ९ ॥

तुश्चोद्यनिरासार्थः[1] । परमेव हि ब्रह्म सत्यकामत्वादिभिर्युक्तं कार्यं ब्रह्मेति कथ्यते । तथा च कार्यब्रह्मणः कारणब्रह्मसामीप्यात् कारणे मुख्यस्य ब्रह्मशब्दस्य कार्ये व्यपदेशो लक्षणया प्रयोग इत्यर्थः, मुख्याभावादिति भावः ॥ ९ ॥

ननु कार्यब्रह्मप्राप्तौ 'तेषां न पुनरावृत्तिः' (बृ. ६-२-१५) इ(तरथा?ति) श्रुतिविरोधः । तत्राह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेण सह अतः कार्याद् ब्रह्मणः परं ब्रह्म प्राप्नुवन्ति उपपन्नसाक्षात्कारा विद्वांस इत्यनावृत्तिश्रुत्यभिधानादवगन्तव्यमित्यर्थः ॥ १० ॥

## स्मृतेश्च ॥ ११ ॥

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मृतेरपि ब्रह्मलोकं प्राप्ताः क्रमेण मुक्तिं प्राप्नुवन्तीत्यवगन्तव्यमित्यर्थः ॥ ११ ॥

इत्थं सिद्धान्तमभिधाय पूर्वपक्षमाह—

## परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् परमेव ब्रह्म गमयत्यमानव इति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ १२ ॥

## दर्शनाच्च ॥ १३ ॥

'तयोर्ध्वमायन्नमृतत्वमेति' (छा. ८-६-६ । क. ६. १६) इति मुक्तेर्गतिपूर्वकत्वदर्शनाच्च[2] परमेव गमयतीत्यर्थः ॥ १३ ॥

---

१. 'तुशब्दश्चो' ख. पाठः. २. 'कत्वाच्च' ख. पाठः.

अपि च—

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

'प्रजापतेः सभां वेश्म प्रपद्ये' (छा ८-१४-१) इत्ययं प्रतिपत्त्यभिसन्धिर्वेश्मप्राप्तिसङ्कल्पो न कार्ये कार्यब्रह्मविषयको न भवति, अपि तु परब्रह्मविषयक एव। 'ते यदन्तरा तद्ब्रह्म' इति परस्यैव प्रकृतत्वादिति पूर्वः पक्षः। अस्मिन् पूर्वपक्षे 'मुख्यत्वाद्' 'दर्शनाच्चे'ति हेतुद्वयमर्वागेवादूषि। प्रकरणाद्वेश्मप्राप्तिसङ्कल्पः परविषय इति, तन्न, 'प्रजापतेः सभां वेश्म प्रपद्ये' इति वाक्यश्रुतिभ्यां दुर्बलप्रकरणविच्छेदेन वेश्मप्राप्तिसङ्कल्पस्य कार्यब्रह्मविषयकत्वावगमाद्, अतः कार्यब्रह्मैव गन्तव्यमिति सिद्धम् ॥ १४ ॥

* ६ अप्रतीकालम्बनाधिकरणम् *

इत्थमर्चिरादिगन्तव्यं निरूप्य गन्तॄणां बुद्धिस्थत्वाद् बुद्धिस्थत्वसङ्गत्या तान् निरूपयितुमिदमाह—

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा-
दोषात् तत्क्रतुश्च ॥ १५ ॥

अत्र पूर्वपक्षे उपासकमात्रस्योत्तरमार्गसिद्धिः। सिद्धान्ते तूभयथाभावसिद्धिरिति फलभेदः। किममानवः पुरुषः सर्वानुपासकान् ब्रह्मलोकं नयति उताप्रतीकालम्बनानिति सन्देहे नियामकाभावात् सर्वानिति पूर्वः पक्षः। सिद्धान्तस्तु अप्रतीकालम्बनान् प्रतीकोपासकभिन्नानुपासकान् नयत्यमानव इति बादरायण आचार्यो मन्यते। ननु तर्हि 'अनियमः सर्वासाम्' (ब्र. ३-३-३१) इत्यत्र सर्वोपासनेषु मार्गोपसंहारः कृतः। तद्विरोध इत्यत आह—उभयथादोषात्। कांश्चिदुपासकान् नयति कांश्चिन्नेत्युभयथाभ्युपगमे अदोषाद् दोषाभावाद्, अनियमन्यायस्य प्रतीकभिन्नविषयकत्वान्न तद्विरोधः। अत्र नियामकमाह—तत्क्रतुश्च तस्य कार्यब्रह्मणः क्रतुरुपासनं यस्य स तत्क्रतुरुपासकः। एवञ्च यो यद्विषयकोपास(न)कः स तत् प्राप्नोतीति श्रुतिस्मृतिसिद्धत्वात् तदुपासकानामेव कार्यब्रह्मप्राप्तिः। प्रतीकोपासनेषु 'नामब्रह्मे'त्यादिषु ब्रह्मणः प्रतीकं प्रति विशेषणत्वेन प्रतीकस्यैव प्राधान्यान्न तदुपासकानां ब्रह्मप्राप्तिः। पञ्चाग्न्युपासकानां त्वब्रह्मोपासकत्वेऽपि श्रुतिबलाद् ब्रह्मप्राप्तिरिति विवेकः ॥ १५ ॥

अपि च—

## विशेषं च दर्शयति ॥ १६ ॥

'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा. ७-१-५) इति नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्युपासनानामुत्कृष्टफलविशेषं दर्शयति 'वाग् वाव नाम्नो भूयसी' (छा. ७-२-१) इत्याद्या श्रुतिः । अयं च फलविशेषः प्रतीकानामुत्कर्षापकर्षवतामुपास्यत्वे युज्यते, नतु सर्वत्रैकरूपस्य ब्रह्मण उपास्यत्वे । तस्माद् ब्रह्मोपासकानामेव ब्रह्मप्राप्तिर्न प्रतीकोपासकानामिति सिद्धम् ॥ १६ ॥

अस्मिन् पादे षडधिकरणानि । सूत्राणि षोडश ।

इति ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
चतुर्थाध्यायस्य तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

* १ सम्पद्याविर्भावाधिकरणम् *

इत्थं पूर्वस्मिन् पादे सगुणब्रह्मोपासकानां-कार्यब्रह्मप्राप्तिः कथिता । अधुना निर्गुणब्रह्मविदां तद्भावमभिधातुमय पाद आरभ्यते—

## सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

पादान्तरत्वादस्य नाधिकरणसङ्गत्यपेक्षा । अत्र पूर्वपक्षे स्वर्गमोक्षयोरविशेषः, सिद्धान्ते विशेष इति फलभेदः। 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८-३-४) इति श्रूयते । तत्र किं स्वर्गादौ सुकृतिन इव निर्गुणब्रह्मविदोऽप्यागन्तुकेन केनचिद्विशेषेणाभिनिष्पत्तिः, उतात्ममात्रेणाविर्भाव इति सन्देहे फलत्वाविशेषात् स्वर्गवदभिनिष्पत्तिरागन्तुकेन विशेषेणेति पूर्वः पक्षः । सिद्धान्तस्तु सम्पद्य स्वप्रकाशात्मानं साक्षादनुभूय तेनैवात्ममात्रेण आविर्भावः विद्वानाविर्भवति । कुतः, स्वेनशब्दात् 'स्वेन रूपेणाभिनिष्पद्यते' इति स्वशब्दादित्यर्थः । फलहेतुकानुमानं मोक्षनित्यत्वश्रुतिबाधितमिति बोध्यम् ॥ १ ॥

ननु स्वरूपात्मकमोक्षस्य सदातनत्वात् कः पुनः पूर्वावस्थातो विशेषः । अत आह—

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

पूर्वमवस्थात्रयकलुषितः संसारीवावतिष्ठमानोऽपि सर्वसंसारानर्थव्रातान्मुक्तः परितः प्रद्योतमानः पूर्णानन्दात्मनावातिष्ठत इति महानयं विशेषः । कुतः पुनरेव-मवगम्यते, प्रतिज्ञानाद् 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा. ८-९-३, ८-१०-४, ८-११-३) इति सकलानर्थविनिर्मुक्तस्यैवानन्दात्मनो व्याख्येयत्वेन प्रति-ज्ञानादित्यर्थः ॥ २ ॥

ननु कार्यज्योतिरुपसम्पन्नस्य कथं मुक्तत्वमत आह—

## आत्मा प्रकरणात् ॥ ३ ॥

अत्रात्मैव ज्योतिर्न भौतिकं तेजः 'य आत्मा अपहतपाप्मा' (छा. ८-७-१) इत्यात्मप्रकरणादित्यर्थः ॥ ३ ॥

* २ अविभागाधिकरणम् *

यथोक्तं मुक्तमुपजीव्य किञ्चिद्विचार्यत इत्युपजीव्योपजीवकभावसङ्गत्येद-माह—

## अविभागेन दृष्टत्वात् ॥ ४ ॥

अत्र पूर्वपक्षे जीवब्रह्मणोरत्यन्तभेदः, सिद्धान्ते तयोरत्यन्ताभेद इति फल-भेदः । किं मुक्तो ब्रह्मभिन्नत्वेनावतिष्ठते उत ब्रह्माभिन्नत्वेनेति सन्देहे 'ज्योतिरुप-सम्पद्ये'ति कर्मकर्तृत्वेन भेदोक्तेर्ब्रह्मभिन्नत्वेनेति पूर्वः पक्षः । सिद्धान्तस्तु अवि-भागेन निरतिशयानन्दब्रह्मात्मनैवावतिष्ठते । कुतः, दृष्टत्वाद् 'ब्रह्मैव सन् ब्रह्मा-प्येति' (बृ. ४-४-६), 'तत्त्वमसि' (छा.६-८-७) इत्यादिश्रुतिष्वभेदस्यैव दृष्टत्वा-दित्यर्थः । भेदोक्तिरौपचारिकीति भावः ॥ ४ ॥

* ३ ब्राह्माधिकरणम् *

यथोदीरितं ब्रह्माभिन्नं मुक्तमुपजीव्य किञ्चिद्विचार्यत इत्युपजीव्योपजीव-कभावसङ्गत्येदमाह—

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

अत्र तत्तत्पक्षसिद्धिरेव फलं द्रष्टव्यम् । स किं ब्रह्मात्मको मुक्तः सत्येन सर्वज्ञत्वादिना युक्तोऽवतिष्ठते, उत सर्वज्ञत्वादेः शशविषाणवदत्यन्तासत्त्वाच्चिन्मा-

---

१. 'रवग' क.पाठः. २. 'र्तृत्वभे' ख.पाठः.

आत्मनावतिष्ठते, आहोस्विद्वस्तुतश्चिन्मात्रो जीवान्तरव्यवहारदृष्ट्या कल्पितसर्वज्ञत्वादिमानिवावतिष्ठत इति सन्देहे सत्येन सर्वज्ञत्वादिना युक्तो मुक्तोऽवतिष्ठत इति जैमिनिराचार्यो मन्यते । कुतः, उपन्यासविधिव्यपदेशेभ्यः । तत्र 'सोऽन्वेष्टव्यः' इति विधानार्थमागतो 'य आत्मा अपहतपाप्मा' (छा. ८-७-१) इत्यादिरुद्देश उपन्यासः । 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा. ७-२५-२) इत्यादिरज्ञातज्ञापको विधिः । 'यः सर्वज्ञ' (मु. १-१-९) इत्यादिर्व्यपदेशः । सोऽयं नोद्देशो विध्यभावात् । नापि विधिः सिद्धवन्निर्देशाद्, अपि तूभयविलक्षणः । अतस्तेभ्यो हेतुभ्यः सप्रपञ्च एव मुक्तात्मेत्याद्यः पूर्वपक्षः ॥ ५ ॥

द्वितीयं पूर्वपक्षमाह—

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

जीवात्मनस्तदात्मकत्वाच्चैतन्यात्मकत्वाच्चितितन्मात्रेण चैतन्यात्मनावस्थिते मुक्ते ब्रह्मणि सर्वज्ञत्वादिशब्दा निरर्थका एव प्रयुज्यन्त इत्यौडुलोमिराचार्यो मन्यते सर्वज्ञत्वादिधर्माणामत्यन्तासत्त्वादिति ॥ ६ ॥

सिद्धान्तस्तु—

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि पूर्वोक्तोपन्यासादिभ्यः पूर्वभावात् पूर्वस्य ब्रह्मस्वरूपस्य सर्वज्ञत्वादेर्व्यावहारिकस्य भावाद् ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरविरोधं बादरायण आचार्यो मन्यते इत्यर्थः । आविद्यकधर्माणां सर्वज्ञत्वादीनामुपपत्तेर्न तेषां तुच्छत्वमिति भावः ॥ ७ ॥

* ४ सङ्कल्पाधिकरणम् *

पूर्वत्र ब्रह्मणि विशेषासम्भवादविशेषप्रवृत्तावपि सविशेषत्वश्रुतिरौपाधिकविषये व्यवस्थापिता । न तथेहाविशेषप्रवृत्तमनुमानमयोगिविषये व्यवस्थापनीयं योगिष्वपि सङ्कल्पादतिरिक्तसाधनसम्भवादिति प्रत्युदाहरणसङ्गत्येदमाह—

**सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥**

अत्र पूर्वपक्षे लोकवृत्तानुसरणं फलं, सिद्धान्ते तु विद्याबलेन सङ्कल्पस्यैव भोगसाधकत्वसिद्धिः फलमिति विवेकः । दहरविद्यायां श्रूयते 'स यदि पितृलो-

१. 'न्यत्वात्म' क. पाठः. २. 'न्यतास्व' क. पाठ.. ३. 'त्तावपि' ख पाठः.

ककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा. ८-२-१) इति । तत्र किं ब्रह्मलोकस्थस्य विदुषः सङ्कल्पादेव पित्रादिविभूतिप्राप्तिः, उत यत्नान्तरसहकृतात् तस्मादिति सन्देहे विदुषः सङ्कल्पो यत्नान्तरसापेक्षः भोगसामग्रीसङ्कल्पत्वाद् अस्मदादिसङ्कल्पवदित्यनुमानेन यत्नान्तरसहकृतात् सङ्कल्पाद्विभूतिप्राप्तिरिति पूर्वः पक्षः । सिद्धान्तस्तु केवलात् सङ्कल्पादेवास्य विदुषः पित्रादिविभूतिप्राप्तिः । कुतः, तच्छ्रुतेः 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति यत्नान्तरनिरपेक्षसत्यसङ्कल्पश्रुतेः । तया च श्रुत्या लौकिकानुमानस्य बाधो द्रष्टव्यः । यदि सङ्कल्पः साधनान्तरसापेक्षः, तर्हि तदभावे विदुषो वन्ध्यसङ्कल्पत्वात् सत्यसङ्कल्पत्वं हीयेत । सङ्कल्पानुगुणसाधनान्तरं त्विष्टमेवेत्यदोषः ॥ ८ ॥

किञ्च

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव सत्यसङ्कल्पत्वादेव विद्वाननन्याधिपतिर्भवति । यदि विदुषः कश्चिदधिपतिः स्यात्, तर्हि तदधीनभोगस्य सङ्कल्पमात्रसाध्यत्वाभावात् सत्यसङ्कल्पत्वं न स्यात् । तस्माद् ब्रह्मात्मकस्य विदुषः सङ्कल्पादेव सर्वैश्वर्यप्राप्तिरिति सिद्धम् ॥ ९ ॥

* ५ अभावाधिकरणम् *

पूर्वाधिकरणदृष्टान्तसङ्गत्येदमाह—

## अभावं बादरिराह ह्येवम् ॥ १० ॥

अत्र पूर्वपक्षे विशेषणश्रुतेरनेकधाभावश्रुतेर्वा मुख्यार्थत्वसिद्धिः, सिद्धान्ते द्वयोरपि श्रुत्योर्विदुषः सत्यसङ्कल्पत्वादेव मुख्यार्थत्वसिद्धिरिति फलभेदः । 'सङ्कल्पादेव' (छा. ८-२-१) इति श्रुत्या विदुषस्तावन्मनोऽस्तीत्यवगतम् । किं तस्य शरीरेन्द्रियाणि न सन्ति, उत सन्ति, आहोस्वित् सन्ति न सन्ति चेति सन्देहे यथा सङ्कल्पादेवेत्यवधारणश्रुत्या साधनान्तराभाव उक्तः, एवं बादरिराचार्यः शरीरेन्द्रियाणामभावं मन्यते । आह ह्येवमभावमाम्नायः— 'मनसैतान् कामान् पश्यन् रमते' 'य एते ब्रह्मलोके' (छा. ८-१२-५, ६) इति । यदि विदुषः शरीरादिकं स्यात् तदा मनसेति विशेषणमन्ययोगव्यवच्छेदकमनर्थकं स्यादित्येकः पूर्वः पक्षः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

शरीरेन्द्रियाणां मनस इव भावं सत्त्वं जैमिनिराचार्यो मन्यते 'स एकधा भवति त्रिधा भवति' (छा. ७-२६-२) इत्यादिना विदुषोऽनेकधाभावविकल्पामननात् । न हि शरीरभेदं विना कदाचिदेकधाभावः कदाचित् त्रिधाभावः सम्भवतीत्यपरः पक्षः ॥ ११ ॥

सिद्धान्तस्तु—

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अत एव मनसेति विशेषणादनेकधाभावविकल्पाभिधानाच्चेति लिङ्गद्वयाद् यदा शरीरादिसङ्कल्पः तदा शरीरेन्द्रियवत्त्वं, यदा तु तत्सङ्कल्पाभावस्तदा शरीरेन्द्रियवत्त्वाभाव इत्युभयविधं विदुष ऐश्वर्यं बादरायण आचार्यो मन्यते द्वादशाहवद् । यथा 'द्वादशाहमृद्धिकामा उपेयुः' इत्युपायिचोदनागम्यत्वाद् द्वादशाहस्य सत्रत्वं 'द्वादशाहेन प्रजाकामं याजयेदि'त्यहर्गणत्वे सति यजतिचोदनागम्यत्वादहीनत्वं चेत्युभयविधत्वं, तद्वदित्यर्थः ॥ १२ ॥

ननु विदुषः शरीराद्यभावे कथं भोगस्तत्राह—

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

तनोः सेन्द्रियस्य शरीरस्याभावकाले सन्ध्यवद् यथा स्वप्ने मानसिकविषयभोगो जाग्रद्विलक्षणस्तद्वद् भोगः । कुतः, 'मनसैतान् कामान् पश्यन् रमते' इति श्रुतेरेवमेवोपपत्तेरित्यर्थः ॥ १३ ॥

ननु देहाद्यभावेऽपि भोगसत्त्वे शरीरादिसत्त्वाङ्गीकारो व्यर्थः स्यात् । अत आह—

भावे जाग्रद्वत् ॥ १४ ॥

देहादिभावकाले यथा जाग्रद्भोगः स्वप्नभोगविलक्षणो भवति, तद्वदित्यर्थः ॥ १४ ॥

* ६ प्रदीपाधिकरणम् *

ननु विकल्पामननलिङ्गेन विदुषोऽनेकशरीराणि सन्तीत्यभाणि । तद्यर्थं, निरात्मकेषु तेषु भोगायोगादित्याक्षेपसङ्गत्येदमाह—

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

अत्र पूर्वपक्षे एकस्मिन्नेव देहे भोगः, सिद्धान्ते सर्वेष्विति फलभेदः । किं विदुषा सृज्यमानानि शरीराणि दारुयन्त्रवन्निरात्मकानि, उतास्मदादिशरीरवत् सात्मकानीति सन्देहे निरात्मकानीति पूर्वः पक्षः । सिद्धान्तस्तु विदुषा सृज्यमानेष्वनेकशरीरेषु विदुष आवेशोऽभिव्यक्तिर्विद्यासामर्थ्यादुपपद्यते प्रदीपवद् । यथा प्रदीप एकोऽनेकवर्तिषु प्रविशति तद्वद्विद्वाननेकान्तःकरणद्वारा देहेषु प्रविशति । तथा हि दर्शयति श्रुतिः 'स एकधा भवति' (छा. ७-२६-२) इत्यादिका । तस्मात् सर्वाण्यपि शरीराणि सात्मकान्येवेति सिद्धम् ॥ १५ ॥

ननु विदुषो न शरीरवत्त्वं युक्तं 'तत् केन कं पश्येद्' (बृ. ४-५-१५) इति 'ततोऽन्यद्विभक्तं यत् पश्येद्' (बृ. ४-३-२३) इति विशेषज्ञानाभावश्रवणादित्यत आह—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

सुषुप्तिमुक्त्योरन्यतरापेक्षमिदं विशेषज्ञानाभावश्रवणम् । हि यतः प्रकरणादेवमाविष्कृतं सुषुप्तिप्रकरणापेक्षया 'ततोऽन्यदि'त्यादि श्रुतम् । परममुक्तिप्रकरणापेक्षया 'तत् केने'त्यादि । तस्मात् सगुणविदः शरीराङ्गीकारे न बाधकमिति ॥ १६॥

* ७ जगद्व्यापाराधिकरणम् *

पूर्वं सङ्कल्पमात्रेण देहादिसर्गे विदुष उत्सर्गतः सर्वैश्वर्यमुक्तम् । तस्येह जगदुत्पत्त्यादावपवादः क्रियत इत्याक्षेपसङ्गत्येदमाह—

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

अत्र पूर्वपक्षे ईश्वरनानात्वं, सिद्धान्ते तदैक्यमिति फलभेदः । किं विदुष ऐश्वर्यमीश्वरस्येव निरङ्कुशम् उत सातिशयमिति विशये निरङ्कुशमिति पूर्वः पक्षः । सिद्धान्तस्तु जगदुत्पत्त्यादिव्यापारवर्जं सातिशयमेवैश्वर्यम् । जगद्व्यापारस्तु परमेश्वरस्यैव, सृष्टिवाक्येषु सर्वत्र तस्यैव प्रकरणात् प्रकृतत्वात् विदुषश्च तत्रासन्निहितत्वादित्यर्थः ॥ १७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

ननु 'आप्नोति स्वाराज्यम्' (तै. १-६-२) इति प्रत्यक्षश्रुत्या ऐश्वर्योपदेशान्निरङ्कुशं विदुष ऐश्वर्यमिति चेद्, न, आधिकारिकमण्डलस्थोक्तेः अधिकारे तत्तद्व्यापारे नियोजयतीत्याधिकारिकः सूर्यादिमण्डलस्थः परमात्मा, तस्योत्तरवाक्ये 'आप्नोति मनसस्पतिम्' (तै. १-६-२) इत्यत्र प्राप्यत्वेनोक्तेर्विदुषः सातिशयमै-

श्वर्यमिति गम्यते । यदि पूर्ववाक्य एव निरतिशयमैश्वर्यमुक्तं स्यात्, तर्हि इदमीश्वरप्राप्तेर्वचनमनर्थकं स्यात् । अतः सातिशयं विदुष ऐश्वर्यमिति सिद्धम् ॥ १८ ॥

## विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

सगुणे ब्रह्मणि विकारावर्ति निर्गुणं स्वरूपमस्ति । तथा हि ब्रह्मणि सगुणत्वनिर्गुणत्वयोः स्थितिमाह श्रुतिः 'तावानस्य महिमा अतो ज्यायांश्च पूरुषः' (छा. ३-१२-६) इत्यादिका । अयं भावः—यथा सगुणस्थितं निर्गुणस्वरूपमुपासको न प्राप्नोति तज्ज्ञानाभावात्, तथा तद्गतं जगदुत्पत्त्यादिकमैश्वर्यं न प्राप्नोति तदुपास्त्यभावाद, उपास्त्यभावश्च श्रुत्यभावादिति ॥ १९ ॥

अत्र दृष्टान्तत्वेन निर्गुणस्वरूपमुक्तम् । तत्र प्रमाणान्तरमाह—

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः । 'न तत्र सूर्यो भाति' (क. २-९-१९) इत्याद्या श्रुतिः, 'न तद् भासयते सूर्यः' (गी. १५-६) इत्याद्या स्मृतिरिति ॥ २० ॥

इतश्चोपासकस्यानिरङ्कुशमैश्वर्यमित्याह—

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

उपासकस्योपास्यदेवतया सम्भोगमात्रेण साम्यं श्रुतं, न जगद्व्यापारेण 'आपो वै खलु मीयन्ते लोकोऽसौ' इत्यादौ । तस्मात् साम्यलिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः ॥ २१ ॥

ननु यद्यैश्वर्यं सातिशयं स्यात्, तर्हि लौकिकैश्वर्यवदनित्यं स्यात् । एवञ्च विदुषामावृत्तिः प्रसज्येतेत्याशङ्क्य परमकृपालुर्भगवान् बादरायणः समादधाति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्ताः, तेषामनावृत्तिरेव 'न च पुनरावर्तते' (छा. ८-१५-१) इत्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदां त्वावृत्तिशङ्कैव नास्ति, यतः सगुणविदामप्यनावृत्तिः । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिः प्रत्यपादि तदस्मि ब्रह्म चिद्घनम् ॥

अस्मिन् पादे सप्ताधिकरणानि । सूत्राणि द्वाविंशतिः ।

अस्मिन् फलाध्याये अष्टात्रिंशदधिकरणानि । सूत्राण्यष्टसप्ततिः ।

अस्यां शारीरकमीमांसायामधिकरणानि (१९१) एकाधिकनवत्युत्तरशतम् ।

सूत्राणि (५५९) पञ्चपञ्चाशदधिकपञ्चशतम् ॥

---

यस्यापाङ्गनिरीक्षणाद् भवरतिं भीतिप्रदामुज्झहत्
त्र्यय्यन्तार्थविमर्शनाद् गतमहामायोऽभवं सन्ततम् ।
तं शुद्धाद्वयबुद्धमुक्तमनघं कारुण्यपूर्णं शिवं
पूर्णानन्दमहाप्रभावमतुलं वन्दे गुरुं शाश्वतम् ॥

जडः क्वाहं बालः क्व च गहनवेदान्तसरणि-
स्तथाप्याम्नायार्थं परमशिवयोगीन्द्रकृपया ।
विजानन् व्याख्यानं व्यरचयमहं वेदशिरस-
स्तदेतत् क्षन्तव्यं मयि सदयदृष्ट्या बुधजनैः ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वती-
पादाब्जसेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या
विरचितायां ब्रह्मसूत्रवृत्तौ
ब्रह्मतत्त्वप्रकाशिकायां

चतुर्थाध्यायस्य चतुर्थः पादः ।
समाप्तश्च फलाध्यायः ।

---

समाप्ता शारीरकमीमांसा ।

# शुद्धिपत्रम् ।

| पृ. | प. | अशुद्धम्. | शुद्धम्। | पृ. | प. | अशुद्धम्. | शुद्धम्। |
|---|---|---|---|---|---|---|---|
| ६ | २५ | कार | कर | ३९ | २ | रुक | रुपक |
| ११ | २४ | वीर्ते | वीति | ४२ | ८ | ए | अत ए |
| २४ | ११ | ब्द | ब्दा | ५० | २२ | या।अ | या अ |
| २६ | १९ | देह | देश | ५२ | २४ | ति स | ति अ |
| ३२ | १२ | अलौ | लौ | ५४ | ६ | दौ।य | दौ य |
| ३३ | ७ | तो हि | ते हि | ६५ | २२ | याद | यमे |
| ३६ | २१ | यऽप्र | यऽतिप्र | ७१ | १ | तृता | तृती |
| ३७ | ५ | ७ | ९ | ११२ | १२ | बं | वं |
| ३८ | ७ | क्तय | क्तया | १६८ | २८ | तेऽय | तेय |